ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्मलिना[१] नितरां मुखच्छाया ॥११॥

अत्र वञ्जुलवने दत्तसंकेता न[२] गतेति व्यङ्ग्यं गुणीभूतम्, तदपेक्षया साक्षाद्रति[३]रूपस्थायिभावव्यञ्जकत्वेन सुखमालिन्यात्मकस्थायिभावस्त्युत्कर्षकत्वाद्वाच्यस्यैव चमत्कारित्वात् अस्यान्तरालिकव्यङ्ग्यापेक्षयैव गुणीभूतव्यङ्ग्यत्वम् । रसापेक्षया तु रसध्वनित्वम् । एवं वस्त्वलंकारध्वन्योरपि वाच्यतः प्राधान्यमात्रेण ध्वनित्वम् । रसापेक्षया तु गुणीभूतव्यङ्ग्यत्वमिति । अत एव सर्वेषां काव्यानां ध्वनित्वमिति[४] महिमभट्टाः ॥

शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥१२॥

[५]लक्षणमाह—अव्यङ्ग्यमिति । तत्त्वं च स्फुटप्रतीयमानव्यङ्ग्यरहितत्वम् । अन्याहितवैचित्र्यतिरोधानेन [६]झटित्यप्रतीयमानरसकत्वमिति यावत्[७] । तस्य विभागमाह—शब्दचित्रं वाच्यचित्रमिति । अवरं अधमम् । तत्र शब्दचित्रं यथा—

उरगं तुरगं खरं नरं वा
करिणं केसरिणं खगं मृगं[८] वा ।
सकृदाप्लुतमेव देवनद्या
लहरी कं न हरीचरीकरोति ॥१२॥

अर्थचित्रं यथा—

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीभृतामाद्यः प्रणवश्छन्दसामिव ॥१३॥

अत्र पूर्वत्र गङ्गाविषयकभावस्य परत्र राजविषय[९]भावस्य सत्त्वेऽपि अनुप्रासोपमाभ्यामाहितचमत्कारव्यवहितत्वाच्चित्रत्वम् । अत्र केचित्—गुणप्रधानभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थितेः उभे काव्ये तदन्यद्यत्तच्चित्रमभिधीयत इति दिशा उभे एव काव्ये, न तु चित्रमित्याहुः ॥

---

१. D नितरां मलिना for मलिना नितरां. २. D नागतेति for न गतेति. ३. A om. °द्रतिरूपस्थायिभावव्यञ्जकत्वेन सुखमालिन्यात्मक°; B adds the above in marg. ४ D ध्वनित्वमेवेति for ध्वनित्वमिति. ५. D अस्य लक्षणं for लक्षणम्. ६. A D झटितिप्रतीय° for झटित्यप्रतीय°. ७. After यावत् D adds तदेव चित्रत्वम्. ८. A B C नगं for मृगं. ९. D °विषयक° for °विषय°.

अथ ध्वनिभेदानाह[1]। तत्रादौ[2] लक्षणामूलध्वनिमाह—

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥१३॥**

लक्षणामूलगूढव्यङ्ग्यस्य प्राधान्ये सति अविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादाद् ध्वनिरिति ज्ञेयः[4]। अत्राविवक्षितत्वं वाच्यतावच्छेदकप्रकारेणेति बोध्यम्। अन्यथा काकेभ्यो दधि रक्ष्यतामित्यत्र वाच्यस्यापि विवक्षणात्तदसंग्रहः स्यात्। अर्थान्तरे इति। स्वार्थमपरित्यज्य अर्थान्तरपरशब्दकमित्यर्थः। अत्यन्तमिति। शक्यस्य सर्वथानन्वयित्वादन्वयाप्रतियोगित्वं तिरस्कार इत्यर्थः॥ केचित्तु [5]कदलीत्यादौ द्वितीयकदल्यादिपदे जडकदलीत्वादिलक्षणाया[6]मर्थान्तरेऽपि स्वविशेषरूपे संक्रमितमित्याहुः। तदत्र लक्षणामूलस्यार्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ ज्ञेयौ। तत्राद्यो यथा—

त्वामस्मि वच्मि विदुषां [7]समवायोऽत्र तिष्ठति।
आत्मीयां [8]मतिमाधाय[9] स्थिति[10]मत्र विधेहि तत् ॥१४॥

अत्र वाच्यस्यानुपयुज्यमानत्वाल्लक्षणैवाश्रयणीया। तथाहि—त्वामुपदेश्यमहमुपदेष्टा वच्मि उपदिशामि इत्यर्था लक्ष्याः। तथा अवश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादरग्राह्यत्वानि व्यज्यन्ते। एवं विदुषामनन्यसाधारणज्ञानवतामिति लक्ष्यम्। समवायः [11]परस्परं सापेक्षतेति लक्ष्यम्। आशुविपक्षदूषकत्वं सर्वग्राह्यैकपक्षत्वं च फलम्। आत्मीयां पराप्रतार्यामिति लक्ष्यम्। अदुष्टपक्षोद्भावनं फलम्। स्थितिं सावधानामिति लक्ष्यम्। विपक्षच्छिद्रप्रेक्षित्वं फलमिति॥

---

१. D ध्वनिभेदाः for °भेदानाह. २. D तत्र for तत्रादौ. ३. D °व्यङ्ग्यप्राधान्ये for व्यङ्ग्यस्य प्राधान्ये. ४. D विज्ञेयः for ज्ञेयः. ५. D कदलीकदलीत्यादौ for कदलीत्यादौ. ६. D अर्थान्तरे for °न्तरेऽपि. ७. A B C समुदायो for समवायः. ८. A गतिम् for मतिम्. ९ D आदाय for आधाय. १०. A स्थिरम् for स्थितिम्. D स्थितिमात्रविधेहि for °मत्र विधेहि. ११. AD परस्परसापेक्षता for परस्परं सापे°.

द्वितीयो यथा—उपकृतमित्यादि[1]। [2]एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति। अत्रापकारातिशयो व्यङ्ग्यः। पार्यन्तिक[3]व्यङ्ग्यं तु पूर्वत्र वात्सल्यं परत्रासूया॥

अभिधामूल[4]ध्वनिमाह—

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**

वाच्यविवक्षायां न ध्वनित्वमित्यत आह—अन्यपरमिति। अन्यपरं व्यङ्ग्यनिष्ठम्। तदाक्षेपकत्वेन तत्र विश्रान्तमिति यावत्॥ एष च

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो[5] लक्ष्यव्यङ्ग्यक्रमः परः[6] ॥१४॥**

अलक्ष्येति। विभावादिभिः प्रत्याय्यते रस इति व्यञ्जकव्यङ्ग्यप्रतीत्योरस्ति क्रमः। स[7] शतपत्रपत्रव्यतिहननवन्न लक्ष्यते। आस्वादेन[8] झटिति चित्ताकर्षणात्। कालसौक्ष्म्याच्च। तत्र च—

**रसभावतदाभासभावशान्त्यादिरक्रमः।**
**भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥१५॥**

आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि परिगृह्यन्ते। अक्रम इति अलक्ष्यक्रम[9] इत्यर्थः। गुणीभूतव्यङ्ग्येऽतिप्रसङ्गवारणार्थ[10]माह—भिन्न इति। हेतुमाह—अलंकार्यतया स्थित इति। प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः। अन्यत्र प्रधाने वाक्योद्देश्ये यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलंकाराः। स्थितः स्थिरतामापन्नः, तेन अङ्गतां बाध्यतां वा प्राप्ते रसादौ न तथात्वमिति। [11]रसवदिति रस इवेति इवार्थे वतिः। अङ्गभूतस्य[12] रसस्य परिपुष्ट्यभावाद्रसतुल्यत्वात्। प्रेय इति भावस्याङ्गत्वे तत्प्रियतरं काव्यम्। [13]रसभावस्याङ्गत्वे ऊर्जस्वि। भावप्रशमस्याङ्गत्वे समाहितमिति मन्तव्यम्॥

---

१. BC उपकृतं बहु यत्र किमित्यादि; D उपकृतं बहु यत्रेत्यादि for उपकृतमित्यादि. २. D om. एतदप...व्यङ्ग्यः. ३. B om. पार्यन्तिक...परत्रासूया. ४. A D °मूलं ध्वनिमाह for °मूलध्वनि°. ५. C om. °व्यङ्ग्यो लक्ष्यव्यङ्ग्य°. ६. A परम् for परः. ७. D स च for स. ८. A आस्वादनेन for आस्वादेन. ९, D असंलक्ष्य° for अलक्ष्य°. १०. A वारणाय for °वारणार्थमाह. ११. B D om. रसवदिति. १२. A अङ्गभूतरसस्य पुष्ट्य° for भूतस्य रसस्य परिपुष्ट्य°. १३. B रसाभासस्य; D अभासस्य for रसभावस्य.

तत्र रसस्वरूपमाह—

कारणान्यथ कार्याणि सहचारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥१६॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥१७॥

कारणानि रामसीतादीनि परस्परानुरागे [1]परस्परकारणानि। तस्योद्दीपने च[2] कारणानि उद्यानादीनि। अथश्चार्थे। कटाक्षादीनि कार्याणि[3]। लज्जाहास्यादीनि सहचारीणि। रत्यादेरुपचायकानि सामग्रीसंपातेन रत्यादिभिः सहचरणात्सहचारीणीत्युच्यन्ते। सहकारीणीति पाठे रत्यादेरेकरूपस्य तत्तद्विचित्रस्मितरुदितादिकार्यजननायोगेन सामग्रीवैचित्र्यापादकानि। विभावा इति। ते तु द्विधा—आलम्बनविभावा नायिकादयः। उद्दीपनविभावा उद्यानादयः। ननु कारणादिशब्दसत्त्वे कथं विभावादिसंज्ञेति चेदुच्यते। सामाजिकनिष्ठरत्यादीना[4]माराध्यत्वेन ज्ञाताः सीतादयो न कारणादयो येन तथा स्युः। तेषां च[5] विभावनानुभावनासंचारणाख्यव्यापारत्रयवत्त्वाच्च तथाविधसंज्ञाः, तेषां च व्यापाराणां यथाक्रमं रत्यादेरीषत्प्रकाशः, स्फुटतरः[6] प्रकाशः, स्फुटतमः प्रकाशः, फलं[7] विगलितवेद्यान्तरत्वेन स्थितिः पुरःस्फुरणादिचमत्कारित्वं च। भाव इति। भावयति वासयति इति भावो वासना। तेन निर्वासनेषु श्रोत्रियादिषु न रसप्रसङ्गः। अथान्तःकरणवृत्तिविशेषस्य रत्यादेरभिव्यक्तावेव कथमनिर्वचनीयानन्दरूपरसोद्भेद[8] इति चेदुच्यते। अयमभिसंधिः। काव्ये हि विभावादिभिरभिव्यज्यते स्थायी, तस्यां चाभिव्यक्तावन्तःकरणवृत्ति[9]रूपायां चैतन्यानन्दस्वरूप आत्मापि भासते, वेदान्तिनये सर्वस्मिन्नेव ज्ञाने आत्मभाननैयत्यात्। आत्ममनोयोगघटिताया आत्मभानसामग्र्याः सत्त्वात्। अज्ञातस्यात्मनो भानं विना प्रत्यक्षादीनामज्ञात[10]ज्ञापकत्वरूपप्रामाण्यानुपपत्तेश्च। एवं सति काव्यदर्शनश्रवणमहिम्ना उक्तया अभिव्यक्त्या चैतन्यस्यानन्दांशे आवरणभङ्गः[11] क्रियते। तथा च रत्याद्यवच्छिन्नं चैतन्यमानन्दांशे

१. C D परस्परं कारणानि for परस्पर°. २. A om. च. ३. D अथ स्वार्थे for अथश्चार्थे. ४. om. °रत्यादीना°. ५. D om. च. ६. A स्फुटतरप्रकाशः for स्फुटतरः प्रकाशः. ७. A परं for फलं. ८. CD °रसोद्बोध for °रसोद्भेद. ९. A om. वृत्ति°. १०. A असंज्ञात for अज्ञात°. ११. D °सङ्गः for भङ्गः.

भग्नावरणतया आनन्दरूपतया प्रकाशमानं रस इति पर्यवसितोऽर्थः। इममर्थं श्रुतिरप्याह तैत्तिरीयशाखायाम्[१]—"रसो वै सः। रसँ ह्येवायं लब्ध्वानन्दी भवति" इति। अयं जीवः। आवरणं त्वज्ञानमेव। ज्ञानान्तरे त्वानन्दांशे आवरणभङ्गाभावान्न रसोद्बोधः। अत एव वक्ष्यामः 'चर्व्यमाणतैकप्राणः' इति। [२]चर्वणा चानन्दांशाभिव्यक्तिः। कथं सैव ज्ञानान्तरे न भवतीति चेन्न। विभावादिज्ञानाभावात्। अत एव वक्ष्यामः 'विभावादिजीवितावधिः' इति। तस्यां चाभिव्यक्तौ लिङ्गोपहितलैङ्गिकभानवद्विभावादिसंभेदोऽप्यावश्यकः। अत एवोक्तं भरतेन—

स्वादः काव्यार्थसंभेदो ब्रह्मानन्दसमुद्भव.[३]।

काव्यार्थो विभावादिस्तेषां संभेदो ज्ञानम्, तेन विभावादिसमूहावलम्बनात्मा रस इत्यर्थः। वयं[४] च[५] वक्ष्यामः पानकरसन्यायेनेति। अत्रेदमवधातव्यम्—वासनाविशेषवतां सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको भावः पौनःपुन्येन रत्यादिभिः समं गृहीतकार्यकारणभावादिसंबन्धैर्विभावादिभिः परिहृतविशेषैर्ममैवैते शत्रोरेवैते [६]तटस्थस्यैवैते, न ममैव तेन शत्रोरेवैते, न तटस्थस्यैवैते इति संबन्धि[७]विशेषस्वीकारपरिहारनियमानवसायात्साधारण्येन प्रतीतैर्नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्साधारण्यमुपागच्छन् चिदात्मना सहाभिव्यक्तस्तत्कालोल्लसच्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधत्[८] ब्रह्मानन्दास्वाद इव प्रादुर्भवन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः॥ ननु प्रागसिद्धौ कथं तस्य प्रतीतिरित्यत आह—वासनात्मतयेति। भावो वर्णनीयतन्मयीभवनयोग्यः। पौनःपुन्येनेति। अत एव[९] धूमादितो वह्न्यादि[१०]ज्ञानवद् विभावादितो रत्याद्यभिव्यक्तिः। ननु कथं [११]रामादिगतत्वेनावगतेभ्यः सीतादिभ्यः सामाजिकरत्युद्बोधोऽसंबन्धादित्यत आह—साधारण्येनेति। काव्यनाट्यश्रवणदर्शनमहिम्ना रत्यादिभावानां सामाजिकस्य वर्णनीयेन सह तन्मयीभावसंपादकत्वाच्च रामादिभेदाग्रहे सति साधारण्येन प्रतीतिर्जायते[१२]। सा च संबन्धिविशेषनिष्ठत्वेनाप्रतीतौ। ननु

१ D ०शाखायाः for ०शाखायाम् २ D चर्वणाच्चा० for चर्वणा०. ३ D ०समुद्भवः इति for समुद्भवः ४ ABc स्वयं for वयं. ५ AD om. च, ६ D om. तटस्थस्यैवैते. ७ AB संबन्ध० for सबन्धि०. ८ CD तिरोदधन्. ९ D om. एव. १० A om. °ज्ञान°. ११ D रामादिसंबन्धित्वेन for °दिगतत्वेन. १२ A om. from °जायते upto साधारण्येन.

सीतात्वादिना ज्ञाने कथं सैव साधारण्येन इत्यत आह-परिहृतविशेषैरिति। विशेषाः सीतात्वादयः। अत एवोक्तम्—एत एव परिहृतविशेषाः रसहेतव इति। अयं[1] विशेषपरीहारो वाक्यार्थबोध[2]काले, ततो रसोद्बोध इति। रत्यादिभावस्यापि साधारण्यं रसोद्बोध[3]हेतुरित्याह—साधारण्यमिति। अन्यथा सीताद्यालम्बनकरत्यादेरात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत्। परगतत्वे [4]स्वरस्यतापत्तिः सभ्यानां रससाक्षात्कारानुपपत्तिश्च[5]। साधारण्यं चोक्तमेव। तदुक्तम्—

पारिमित्या[6]ल्लौकिकत्वात्सान्तरायतया तथा।
अनुकार्यस्य रत्यादेरुद्बोधो न रसीभवेत्॥

पारिमित्य[7]मसाधारण्यम्। स च न कार्यस्तस्य चित्स्वरूपत्वात्। नापि घटादिवद् ज्ञाप्यः, तस्य फलव्याप्यत्वाभावात्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचर्यत इति। तथा वृत्तिव्याप्यत्वाद् ज्ञाप्य इत्युपचर्यते[8]। तदुक्तम्—

फल[9]व्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते॥ इति।

सा च वृत्तिस्तत्त्वमस्यादिवाक्यै[10]र्लाक्षणिकी काव्य[11]व्यञ्जनामूलेति स्मर्तव्यम्। सा च तत्त्वमसीत्यत्रेव[12] काव्ये शब्दार्थाभ्यां साक्षात्काररूपा जायते, तेन रससाक्षात्कार इति व्यवहारः। यः साक्षादपरोक्षं ब्रह्मेति चैतन्यांशे साक्षात्त्वाच्च। व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्। अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुण[13]भयानकयोः। चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीर[14]करुणभयानकानामिति पृथगनैकान्तिकत्वात् विभावादयो मिलिता एव व्यञ्जकाः। यत्र तु एकैकस्या[15]वस्थितिस्तत्रान्यतमद्वयाक्षेप इति पृथग[16]नैकान्तान्मिलितस्यैव व्यञ्जकत्वात्। रसस्य विभावादिसमूहालम्बनात्मकत्वेनैकैकस्मादभिव्यक्तेरसंभवाच्च॥

---

१ BC अयं च for अयं. २ A om. °बोध°. ३ D रसोद्बोधे for रसोद्बोध°. ४ C स्वरस्यतापत्तेः for ०पत्तिः. ५ C ०नुपपत्तेश्च for ०नुपपत्तिश्च. ६ AB पारमित्या० for पारि०. ७ A पारमित्यं for पारिमित्यं. ८ D इत्यप्युच्यते for इत्युपचर्यते. ९ A फले व्याप्य० for फलव्याप्य०. १० CD °वाक्ये for °वाक्यैः. ११ CD काव्ये for काव्य°. १२ D अत्रैव for अत्रेव. १३ D om. करुणभया......स्येव. १४ AD om. वीर°. १५ BC om. अव°. १६ A पुनरनैका° for पृथगनैका°.

तद्विशेषानाह—

श्रृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥१८॥

तत्र श्रृङ्गारस्य द्वौ भेदौ संभोगो विप्रलम्भश्च । उभयस्यैव रतिप्रकृतिकत्वात् । तत्राद्यः परस्परालोकनालिङ्गनचुम्बनाद्यनन्तभेदादपरिच्छेद्य इति संभोगत्वसामान्यमेकमाश्रित्य एक एव गण्यते । संभोगत्वं तु विप्रलम्भभिन्नत्वे सति रतिप्रकृतिकत्वम् । यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
निद्राव्याजमुपागतस्य सुचिरं[1] निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं[2] परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥१६॥

अपरस्त्वभिलापविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । स च संगमप्रत्याशाकालीनस्तदनुत्पादः । अभिलाप इच्छा । देशैक्येऽपि गुर्वादिपारतन्त्र्यं विरहः । देशैक्य इति विशेषणादस्य प्रवासाद्भेदः कथितः । स्वतन्त्रेच्छेन मुनिना तथैव विभागकरणात् । अन्या[3]संभोगिनि प्रिये कोप ईर्ष्या । अन्यहेतुकोऽपि[4] विप्रलम्भ इति केचित् । प्रवासो वैदेश्यम् । मुन्यादिकोपनियन्त्रणं शापः । अत्र हेतुर्नियतपूर्ववर्ती । अभिलाषस्यानुत्पादकत्वेऽपि पूर्व[5]वर्तित्वं नियतमेव । सिद्धे इच्छाविरहात् ।

यूनोरेकतरस्मिन्गतवति लोकान्तरे[6] पुनर्लभ्ये ।
विमनायते [7]यदैकस्तदा भवेत्करुणविप्रलम्भ[8] इति ॥

इति मूर्च्छितनायिकादिविषयकः करुणविप्रलम्भोऽप्यन्यो[9]ऽस्तीति प्राञ्चः ॥

क्रमेणोदाहरणानि—

न्यञ्चद्भ्रूभङ्गि तस्याः किं लज्जालोलविलोचनम् ।
अन्तःस्मितसुधासिक्तं भूयादधवचो मयि ॥१६॥

---

१ D बहुशो for सुचिरं. २ BD विस्रब्धं for विश्रब्धं. ३ D अन्यासंगिनि for अन्यासंभोगिनि. ४ A om. अपि. ५ A सर्ववर्तित्वं for पूर्व°. ६ D लोकान्तरं for लोकान्तरे. ७ A यदेकः for यदैकः. ८ A °विप्रलम्भोऽपि for °विप्रलम्भ इति. ९ A om. अन्यः.

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृत्
यो मां नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥१७॥
निःशेषच्युतचन्दनमित्यादि[1] ॥
यामीति प्रियपृष्टायाः प्रियायाः[2] कण्ठसंस्थयोः[3] ।
वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥१८॥
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते[4] मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥१९॥

अत्र आद्यपादत्रय एव विप्रलम्भोदाहरणम्। क्रूरेत्यादिवाच्यान्तरसंभवाभिव्यञ्जकम्। शठेन विधिनेत्यस्य नानेन तुल्यता। तत्र समाप्तिपर्यन्तं यावत्तावत्पदाभ्यामेकवाक्यत्वेनैवान्वयात्[5] ॥

अथ हास्यादीनां क्रमेणोदाहरणानि—

दण्डकमण्डलुमण्डितहस्तः
सुललिततिलकविभूषितमस्तः।
अयमुपसर्पति जङ्गमलोभ-
[6]श्चलितकषायपटार्पितशोभः ॥२०॥
गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥२१॥
कृतमनुमतं[7] दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।

---

१ A °मिति for °मित्यादि. २ D om. प्रियायाः ३ D कण्ठलग्नयोः for कण्ठसंस्थयोः ४ C आलिप्यते for आलुप्यते. ५ A °वाक्यतैव न्याय्या for °वाक्यत्वेनैवान्वयात्. ६ CD चलकषाय° for चलितकषाय°. ७ D अनुमितं for अनुमतं.

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥२२॥

वीरस्तु दानधर्म[1]दयायुद्ध[2]भेदाच्चतुर्विधः । क्रमेणोदाहरणानि —

विभज्य मेरुर्न यदर्थिसात्कृतो
न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं
द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥२३॥

राज्यं वसु च देहश्च भार्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम्[3] ॥२४॥

शिरामुखैः स्यन्दत एव[4] रक्त-
मद्यापि देहे मम मांसमस्ति[5] ।
तृप्तिं न पश्यामि तवापि ताव-
त्किं भक्षणात्त्वं विरतो गरुत्मन् ॥२५॥

क्षुद्राः संत्रासमेते विजहित[6] हरया भिन्नशक्रेभकुम्भा
[7]युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥२६॥

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा[8]
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥२७॥

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वन्त्रनेत्रः प्रकटितवदनः[9] प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥२८॥

---

१. C °दयाधर्म° for °धर्मदया°. २. D om. °युद्ध°. ३. D सदोधतां for सदोद्यतम्. ४. C om. एव. ५. A रक्तमस्ति for मांसमस्ति. ६. A C विजहत for विजहित. ७. B युष्मद् गात्रेषु for युष्मद्देहेषु before correction. ८. D कर्णवर्त्मा for कीर्ण°. ९. C D प्रकटितदशनः for °वदनः.

चित्रं महानेष नवावतारः[1]
क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः
काप्याकृतिर्नूतन एषसर्गः ॥२६॥

एषां स्थायिभावानाह—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥१६॥

स्पष्टम् । तथा नाट्यादन्यत्र—

निर्वेद[2]स्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

निर्वेदस्वरूपमाह—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ॥२०॥

अत्रेदमवधातव्यम्—

स्थायी स्याद्विषयेष्वेव[3] तत्त्वज्ञानाद्भवेद्यदि ।
इष्टानिष्टवियोगाप्तिकृतस्तु[4] व्यभिचार्यसौ ॥२१॥

इति ॥ असौ निर्वेदः ॥ यथा—

धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति विहगा[5] निःशङ्कमङ्के[6] स्थिताः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिमण्डपजुषामायुः परं क्षीयते ॥३०॥

व्यभिचारिणो ब्रूते—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः[7] ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥२२॥

---

१. AC तवावतारः for नवावतारः. २. A निर्वेदः स्थायि° for निर्वेदस्थायि°. ३. A विषयेष्वेष° for विषयेष्वेव. ४. D हेतुको for °कृतस्तु. ५. शकुना for विहगा. ६ D अङ्केशयाः for अङ्के स्थिताः. ७. C °भ्रमाः for °श्रमाः.

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥२३॥
सुप्तं[1] विबोधोऽमर्षश्चेत्यवहित्थ[2]मथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥२४॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥२५॥

बलस्यापचयो ग्लानिः शङ्कानिष्टसमुन्नयः[3] ।

समुन्नयः[4] संभावना ।

परोत्कर्षाक्षमासूया शङ्कोपहसितादिकृत् ॥
अनर्थातिशयाच्चित्तस्यावेगः संभ्रमो मतः ।
कोप एव स्थिरतरो ह्यमर्ष इति कथ्यते ॥
अवहित्थाकारगुप्तिरर्थनिर्धारणं मतिः ।
औत्पत्तिकै[5]र्मनःक्षोभस्त्रासः कम्पादिकारकः ॥
पूर्वापरविचारोत्थं भयं त्रासात्पृथग्भवेत् ।

इति दिशा त्रासस्य व्यभिचारित्वं भयस्य स्थायित्वमिति बोध्यम् । अपस्मारस्य व्याधित्वेन प्राप्तावपि पुनरुपादानं बीभत्सभयानकयोरेव संभवनियमात्[6] ॥

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तः

आदिग्रहणान्मुनिगुरुनृपपुत्रादिविषया । कान्तादिविषया[7] तु व्यक्ता शृङ्गारः । उदाहरणम्[8] --

कण्ठकोणविनिविष्टमीश ते
कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपु-
र्भेदवृत्ति यदि मे न रोचते ॥२१॥

१. A om. this line and next. २. D °श्चाप्यवहित्थ° for °श्चेत्यवहित्थ°. ३. D °समन्वयः for °समुन्नयः. ४. D समुन्वयः for समुन्नयः. ५. D औत्पातिकैः for औत्पत्तिकैः. ६. B °नियमाय for °नियमात्. ७. D कान्ताविषया for कान्तादि°. ८. D यथा for उदाहरणम्.

ननु कथमस्य न रसत्वमिति चेन्न । नव रसाः, अन्ये भावा इति स्वतन्त्रेच्छेन मुनिना तथैव विभागकरणात् । अत एव वात्सल्यनामा दशमो रसोऽस्तीति कस्यचिन्मतं निरस्तम्[1] । भावेनैव गतार्थत्वाच्च ।। व्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य[2] दृष्टा मया
मा मां[3] संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रात[4]स्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ।।३२।।

रसेऽनुभूयमानेऽपि अत्र[5] विधिं प्रत्यसूयैव काव्यसर्वस्वत्वेन प्रतीयते[6] इत्यसौ भावध्वनिरिति व्यवह्रियते । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । इयं भावस्थितिरुक्ता ।।

तदाभासा अनौचित्यप्रवर्तिताः ।।२६।।

तदाभासा रसाभासा भावाभासाश्च । तत्र रसाभासो[7] यथा-

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे[8] यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ।।३ ।।

अत्र यं यं इत्यसकृत्कर्मोपादानं तस्या[9] अनेककामुकविषयमभिलाषं[10] व्यनक्ति । यद्येकविषयत्वमभिमतं[11] स्यात्तदा सकृदेव कर्मोपादानं कुर्यात् । [12]रमणालिङ्गनान्वेषणादिव्यापारा बहवस्ते च सर्वे एव [13]वर्तमानकालीना नैकविषयत्वे संभवन्तीति अनेककामुकविषयाभि[14]लाषाद्रतेराभासत्वं च[15] ।।

भावाभासो यथा —

राकासुधाकरमुखी तरलायताक्षी
स[16]स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः[17] ।।३४।।

---

१. A अपास्तं for निरस्तम्. २. AD स्वप्नेऽथ for स्वप्नेऽद्य. ३. B मा for मां. ४. D भ्रान्तस् for भातस्. ५. D reads अत्र before रसे. ६. D अनुभूयते for प्रतीयते. ७. D रसो for रसाभासो. ८. D रणमुखमखे for रणमखमुखे. ९. D om. तस्या. १०. D reads तस्यां after अभिलाषं. ११. A अभिलषितं; D अभिप्रेतं for अभिमतं. १२. AB रमणरणालिङ्ग° for रमणालिङ्ग°. १३. D प्रवर्तमान° for वर्तमान°. १४. °अभिलाषप्रत्ययाच्च for °भिलाषाद्. १५. CD om. च. १६. BD सा स्मेर° for सस्मेर°. १७. AD इवाभ्युपायः for इहा°.

अत्र चिन्ता अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ॥

**भावस्य शान्तिरुदयः संधिः शबलता तथा ।**

क्रमेणोदाहरणानि[1]—

तस्यां रघोः सूनुरुपस्थितायां
वृणीत मां नेति समाकुलोऽभूत् ।
आश्वासित[2]स्तत्क्षणमंसकूटे
वामेतरेण स्फुरता भुजेन ॥३५॥

अत्रावेगस्य ।

विलोचनं दक्षिणमञ्जनेन
संभाव्य तद्वञ्चितवामनेत्रा ।
प्रासादवातायनसंनिकर्ष[3]
ययौ शलाकामपरां[4] वहन्ती ॥३६॥

अत्रौत्सुक्यस्य ।

अर्धमुपेतुं[5] वाञ्छत्यर्धमपेतुं[6] च धातरि प्राप्ते ।
इति दोलायितदेहः पायादर्धाङ्गनारीशः ॥३७॥

अत्र धैर्यावेगयोः । यथा च—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥३८॥

अत्रावेगजडतयोः ।

क्वाकार्यं शशलक्ष्मणः कुल[7]मिदं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः[8]श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि[9] कः खलु युवा धन्योऽधरं धास्यति ॥३९॥

अत्र वितर्कौत्सुक्यमतिस्मृतिशङ्कादैन्यधृतिचिन्तानां तिलतन्दुलवच्चर्व्यमाणता । वस्तुतस्तु एषां पूर्वपूर्वोपमर्देन[10] परपरोदयः शबलता । अत एव 'संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा' इत्यत्रेदमेवोदाहरिष्यते । एषु सत्यपि रसे काव्यसर्वस्वतां गतै-रेतैरेव व्यवहारः । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् ॥

---

१ D यथा for उदाहरणानि. २ A वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद for the second half of the stanza. ३ C ०संनिकर्षे for ०संनिकर्षं, ४ C अपरा for अपरां, ५ D अपेतुं for उपेतुं. ६ D उपेतुं for अपेतुं. ७ CD क्व च कुलं for कुलमिदं. ८ A मे for नः. ९ CD उपैहि for उपेहि. १० A पूर्वोपमर्देन for पूर्वपूर्वोप०.

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते ॥२७॥**

अनन्तत्वादिति । तथाहि[1]—नव रसाः, तत्र शृङ्गारस्य द्वौ भेदौ संभोगो विप्रलम्भश्च । तत्र संभोगस्यापि परस्परदर्शनालिङ्गनपरिचुम्बनकुसुमोच्चयजलविहारादयो बहवो भेदाः । विप्रलम्भस्याभिलापादय उक्ताः । तत्रापि नायिका[2]नायकयोरुत्तमाधममध्यमप्रकृतिकत्वम् । तत्रापि देशकालावस्थाभेदः[3] । इत्येकस्यैव रसस्यानन्त्यं का गणना सर्वेषाम् । असंलक्ष्यक्रमत्वं सामान्यमाश्रित्य रसादिध्वनिरेक एव गण्यते ॥

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।**

**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥२८॥**

अनुस्वानोऽनुरणनं तदाभस्तत्सदृशः संलक्ष्यः क्रमः पौर्वापर्यम्, अर्थाद्व्यञ्जकेन सह यस्य एवंविधस्य व्यङ्ग्यस्य स्थितिर्यत्र स इत्यन्वयः । यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तद्वद् वस्त्वलंकृतितद्व्यञ्जकयोरित्यर्थः । स च शब्दशक्त्युद्भवोऽर्थशक्त्युद्भवः उभयशक्त्युद्भवश्चेति त्रिविधः । तत्र शब्दा यत्र परिवृत्तिं न सहन्ते स शब्दशक्त्युद्भवः । तदन्योऽर्थशक्त्युद्भवः । यत्र केचन[4] शब्दाः परिवृत्तिसहिष्णवः, केचित्त्वन्यथा, उभयोरपि काव्यसर्वस्वत्वं च, तत्रोभयशक्तिमूलः । अत्र

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।**

**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥२९॥**

वस्त्वेवेत्यनलंकारं वस्तुमात्रम् । तत्राद्यो यथा—भद्रात्मन [१] इत्यादि । अत्र मिथोऽसंबद्धार्थद्वयबोधकत्वेन वाक्यभेदो मा भूदिति प्रकृतयोरुपमालंकारो मिथःसंबन्धो व्यङ्ग्य इति । वस्तुमात्रं यथा—

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यस्य प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥४०॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते ।

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ।**

**प्रौढोक्तिमात्रसिद्धो वा कवेस्तेनोम्भितस्य वा ॥३०॥**

१ A ते हि for तथाहि. २ BCD om. नायिका०. ३ B ०भेदाः for ०भेदः. ४ C केचित् for केचन.

**वस्तु वालंकृतिर्वेति चतुर्भेदो व्यनक्ति यत् ।**
**वस्त्वलंकारमथवा तेनासावष्टधा मतः ॥३१॥**

अत्र स्वतःसंभवी न केवलभणितिमात्रनिष्पन्नो यावद्बहिरौचित्येनापि संभाव्यमानः। प्रौढोक्तिमात्रनिष्पन्नः बहिरसन्नपि निर्मितः कविना। कविनिबद्धेन वा वक्त्रा इत्यन्यदेतत्। वस्तुतस्तु तद्वर्णितस्येति भेदान्तरं न[१]संभवत्येव। कविनिबद्धस्यापि कवित्वात्। तेनार्थः स्वतःसंभवी प्रौढोक्तिमात्रनिष्पन्न इति द्विविधः। प्रत्येकं वस्तु वालंकृतिर्वेति चतुर्विधो व्यञ्जकः। तस्य प्रत्येकं वस्तु वालंकारो वा व्यङ्ग्य इति अष्टविधोऽर्थशक्त्युद्भवो ध्वनिः। क्रमेणोदाहरणानि[२]—

अलससिरमणि[३] धुत्ताणमग्गिमो पुत्ति धणसमिद्धि[४]मओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥४१॥

अत्र ममैवोपभोग्योऽयमिति वस्तुना वस्तु व्यज्यते।

धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेऽपि[५]।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥४२॥

अत्र अहं धन्या त्वमधन्येति व्यतिरेकालंकारः।

दर्पान्धगन्धगजकुम्भ[६]कपाटकूट-
संक्रान्त[७]निघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥४३॥

अत्र उपमालंकारेण सकलरिपुकुलक्षयः[८] क्षणात्करिष्यत इति वस्तु।

गाढकान्तदशनक्षतव्यथा-
संकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचय-
न्निर्दशन्युधि रुषा निजाधरम् ॥४४॥

---

१ A नास्त्येव for न संभवत्येव. २ D यथा for उदाहरणानि. ३ A °सिरोमणि for °सिरमणि. ४ BC °समुद्धि° for °समिद्धि°. ५ D रतान्तरेषु for °न्तरेऽपि. ६ C °कुन्त° for °कुम्भ°. ७ D °संक्रान्ति° for संक्रान्त°. ८ D °कुलक्षयं for °कुलक्षयः.

अत्र विरोधालंकारेण मम क्षत्या अन्यस्य क्षतिर्निवर्ततामिति नृपबुद्धिरुत्प्रेक्ष्यत इति उत्प्रेक्षालंकारः। एषूदाहरणेषु स्वतःसंभवी व्यञ्जकः।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥४५॥

अत्र वस्तुना येषा[1]मधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन[2] चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते।

केसेसु बलामोडिअ तेण[3] अ समरम्मि जयसिरी गहिआ।
जह कंधराहिँ विहुरा तस्स दढं कण्ठअम्मि संठविआ ॥४६॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कंदरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा।

गाढालिङ्गणरहसुज्जअम्मि दइए लहुं समोसरइ।
माणंसिणीण माणो वीडणभीरु व्व हिअआहि ॥४७॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनं[4] तत्र विजृम्भत इति वस्तु।

जा ठेरं व हसन्ती कइवअणम्बु[5]रुहबद्धविणिवेसा।
दावेइ भुवणमण्डलमण्णं चिअ जअइ सा वाणी ॥४८॥

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं[6] जगदजलजासनस्था निर्मिमीते इति व्यतिरेकः। एवं कविनिबद्धप्रौढोक्तिमात्रनिष्पन्नोऽप्युदाहार्यः॥

## शब्दार्थोभयभूरेकः

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम् ॥४९॥

अत्र शब्दार्थाभ्यामुभाभ्यामपि समकक्षतया रात्रिनायिकयो[7]रुभयोरुपमानोपमेयभावो व्यज्यते इति उभयशक्तिमूलत्वम्।

---

1 C येषामर्थाधिगमो for येषामधि०. २ C ०जनितेन for ०जननेन. ३ D देण for तेण.
४ D om. from प्रत्यालिङ्गनं up to अत्रोत्प्रेक्षया below. ५ AB °वयणम्बु° for °वअणम्बु°.
६ D नवं नवं for नवं. ७ B रात्रिनायकयोः for ०नायिकयोः.

**भेदाश्चतुर्दशास्य तत् ।**

अस्य ध्वनेः ।

**वाक्ये द्व्युत्थः पदेऽप्यन्ये**[1]

अत्रेदं बोध्यम्—अविवक्षितवाच्यप्रभृतयो यावन्तो ध्वनिभेदाः कथितास्ते सर्वे वाक्ये भवन्ति । विनोभयशक्तिमूलं पदेऽपि स्युरिति प्राञ्चः । सोऽपि पदे भवतीति नवीनाः । यत्र सर्वाणि समकक्षतया पदानि व्यञ्जकानि प्रकृतार्थोपकारे पर्यवस्यन्ति तत्र वाक्यगतत्वेन व्यवहारः, यत्र त्वेकमेव प्राधान्येन व्यञ्जकं तत्र पदगतत्वेनेति वाक्यपदगतत्वेन ध्वनीनां विवेक । तत्र

**वाक्ये पूर्वमुदाहृताः ॥३२**

पदे[2] किंचिदुदाह्रिय यथा—

बहवस्ते गुणा राजन्नेकस्ते[3] सुमहान्गुणः ।
मित्राणि तव मित्राणि नान्यथा स्युः कदाचन[4] ॥५०॥

अन्यदपि स्वयमेव बोध्यम् । एवं प्रबन्धेऽपि अर्थशक्तिमूलो[5] यथा—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥५१॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां[6] गतिरीदृशी[7] ॥५२॥

रात्रावन्धस्य दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरं[8] वचनम् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥५३॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढा[9]स्त्यजध्वमविशङ्किताः ॥५४॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावृत्तिनिष्ठं चेति प्रबन्ध एव व्यञ्जकतया प्रथते । अन्येऽपि भेदाः स्वयमूहनीयाः । अपि शब्दात्पदवाक्ययोः ।

---

१ AB पदेऽप्यन्यो for ०प्यन्ये. २ D पदेऽपि for पदे. ३ A एकस्तत्र; D एकस्तु सु° for एकस्ते सु°. ४ After कदाचन D adds : अत्र द्वितीयमित्रपदस्याश्वस्तत्वं लक्ष्यम्, तदतिशयो व्यङ्ग्यः. ५ D अर्थशक्तिभूः for °शक्तिमूलो. ६ C प्राणिनो for प्राणिनां. ७ After ईदृशी D adds इति. ८ BC पुरुषवचनपरं for °विसर्जनपरं. ९ बालाः for मूढाः.

पदैकदेशरचनावर्णेष्वपि रसादयः[1] ॥३३॥

पदं सुवन्तं तिङन्तं च। एकदेशो धातुनामरूपः प्रकृतिभागः। तिङ्सुब्रूपः प्रत्ययभागश्च। तत्र धातोर्व्यञ्जकता यथा—

रइकेलिहिअणिअंसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ॥ ५५॥

अत्र जयति उत्कर्षाश्रयो भवति। स च लोकोत्तररूपेण[2] पिधानवत्तया[3]। लोकोत्तरता च[4] चमत्कारानुगुणतया। आनुगुण्यं च रागातिशयहर्षलज्जासंपत्तिद्वारकरसातिशयपोषणात्। तच्च जयतिना साध्यते न तु शोभते इत्यादिनेति[5] प्रकृते[6]र्व्यञ्जकत्वम्।

नाम्नो[7] व्यञ्जकत्वं यथा—

प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न[8] यात्युन्मनाः।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥५६॥

अत्र पदानीति न तु द्वाराणीति द्वारादिव्यवच्छेदो[9] व्यङ्ग्यः। स च संभोगसंचार्यौत्सुक्योपोद्बलनद्वारा रसपोषकृत्[10]॥

तिङ्सुपोर्यथा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना॥५७॥

अत्र लिखन्निति न लिखति अपि तु प्रसादपर्यन्तमास्ते। तथा च लिखनस्य न साध्यत्वं किं त्वप्राधान्यमबुद्धिपूर्वकत्वं व्यज्यते। किं तु प्रसादपर्यन्तायाः स्थितेरेव साध्यत्वमिति

---

१ C After रसादयः, D adds अपिशब्दात्प्रबन्धेषु नाटकादिषु. २ D °रूपया for °रूपेण. ३ AD पिधानतया for पिधानवत्तया. ४ D om. च. ५. A om. इति. ६ A प्रकृतिव्यञ्जकत्वं for प्रकृतेर्व्यञ्जकत्वं. ७ A om. नाम्नो व्यञ्जकत्वं. ८ D यावत्प्रयात्युन्मनाः for यावन्न यात्युन्मनाः. ९. A om. व्यवच्छेदो. १० D °पोषणकृत् for °पोषकृत्.

। तथा आस्ते न त्वासित इति, तेन स्थित्यविच्छेदो व्यङ्ग्यम्[१]। एवं भूमि-भूमाविति। न हि बुद्धिपूर्वकं किंचिल्लिखति। अधिकरणताभिधाने त्वाकाङ्क्षि-ाण उद्देश्यत्वं प्रतीयते, न च तथेति[२]। यथा वा 'रमणीयः क्षत्रियकुमार ' इत्यतीतकालोपदेशा[३]त्स्थितेर्वर्तमानत्व[४]भविष्यत्त्वव्यवच्छेदोऽवगम्यते[५]। दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः। यथा वा—

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥५८॥

ावित्यनेन निरन्तरभावनावशेन प्रत्यक्षायमाणत्वम्। भुवनेष्विति बहुवचनेन ;चिदिति। गुणैरित्यनेन दोषव्यवच्छेदो व्यज्यते। तथा न त्वदिति न मदिति स्मदित्यस्य सर्वापेक्षकत्वम्[६]। अभाग्यादिति वक्तव्ये भाग्यविपर्ययादित्युक्तम्। ग्राभावेऽपि भाग्यान्येव तत्त्वेन परिणतानीति प्रतीयते। तैस्तु निर्वेदशङ्कादैन्य-ाशयः पोष्यते॥ यथा वा—

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥५९॥

ज्व्ययीभावकर्मभूताधाराणां तरुणत्व इति धनुषः समीप इति मौलौ वसती-तुल्येऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपविशेषो यश्चमत्कारकारी, स एव व्यञ्जकः। -इमनिजा सौकुमार्यपरेण नवोद्भिन्नं वयः प्रतीयते, श्रुतिकटुना तु त्वप्रत्ययेन एवं पूर्वपद[७]प्रधानाव्ययीभावेन मदनधनुषो गुणतया जगद्वशीकरणसाम्राज्यं य व्यज्यते[८]। तथा मौलिमिति कर्मत्वेन व्याप्तिसूचनमाधारत्वं ह्येकदेशवृत्ति-र्वहतीत्याद्युन्नेयम्॥ रचनावर्णयोर्व्यञ्जकत्वं वक्ष्यते। एषां संख्या नोक्ता त्वात्॥

**एते प्रोक्ताः शुद्धभेदास्तेषां चान्योन्ययोजनम्।**
**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ॥३४॥**

---

ङ्ग्यः for व्यङ्ग्यम्. २ D यथेति for तथेति. ३ A °पदेशस्थितेः for °पदेशात्स्थितेः. ानत्वे भवि° for वर्तमानत्वभवि°. ५ A गम्यते for अवगम्यते. ६ AC सर्वाक्षेपकत्वम् क्षकत्वम्. ७ A om. °पद°. ८ D प्रतीयते for व्यज्यते.

तेषां ध्वनीनां संशयास्पदत्वेनानुग्राह्यानुग्राहकतया एकव्यञ्जकानुप्रवेशेन चेति त्रिविध[१]-संकरेण। परस्परनिरपेक्षरूपया एकप्रकारया च[२] संसृष्टया। एकत्र काव्ये संसर्गस्वरूपया योजनमपि। यथा—

खणपाहुणिआ देअर जाआए सुहअ किं पि दे भणिआ ।
रुअइ पलोहरवलहीघरम्मि अणुणिज्जदु वराई ॥६०॥

पलोहरशब्दो देशभाषायां गृहपश्चाद्भागवाची[३]। अत्रानुनयः किमुपभोगलक्षणोऽर्थान्तरे संक्रमितः, किमनुरणनन्यायेन उपभोग एव व्यङ्ग्ये व्यञ्जक इति संदेहः। यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः[४] पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥६१॥

अत्र लिप्तेति पयोदसुहृदामिति च व्यापनपरितोषकारित्वे लक्ष्ये इत्य[५]त्यन्ततिरस्कृतवाच्ययोः व्यापनातिशयपरितोषकारित्वातिशयध्वन्योः संसृष्टिः। आभ्यां सह रामोऽस्मीत्यस्य अर्थान्तरे दुःखसहिष्णुत्वरूपे संक्रमितवाच्यस्य। एतादृशवैयग्र्यहेतुसंपातेऽपि जीवित्वरूपदुःखसहनातिशयध्वनेरनुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन[६] चार्थान्तरसंक्रमितवाच्यस्य दुःखसहनातिशयध्वने रसध्वनेश्च संकरः। एवमन्यद[७]प्युदाहार्यम् ॥

अथ गुणीभूतव्यङ्ग्यस्य प्रभेदा[८]नाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः[९] ॥३५॥**

कामिनीकुचकलशवद् गूढं चमत्करोति। अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव[१०]। यथा—

---

१. D त्रिविधेन for त्रिविध°. २ AB om. च. ३ D गृहचारी for गृहपश्चाद्भागवाची. ४ CD सीकरिणः for शीक°. ५ D इत्यत्रात्यन्त° for इत्यत्यन्त°. ६ D °नुपदप्रवेशेन for °नुप्रवेशेन. ७ CD om. अपि. ८ D भेदान् for प्रभेदान्. ९ D मताः for स्मृताः. १० B गुणीभूतव्यङ्ग्यमेव for गुणीभूतमेव.

राजपिसूनोरपि मे मर्कटद्वारसेवनात् ।
जीवन्तमपि मां ब्रह्मन्मृतमित्यवधारय ॥६२॥

अत्र[1] मरणमेव श्रेय[2] इत्यनुतापातिशयो व्यङ्ग्यः सर्वजनवेद्यतया अगूढ एव । अथ[3] रसादे रसाद्यङ्गे उत्कर्षकम्, तथा वाच्यस्यानुरणनरूपमङ्गम् । केचित्तु वाच्यस्यापि[4] रसाद्यङ्गमित्याहुः । लक्ष्यदर्शने[5] विशिष्य विवेचयिष्यामः । यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥६३॥

अत्र शृङ्गारः करुणस्योत्कर्षकः । तथाहि—एतत्सम[6]रपतितं भूरिश्रवसो हस्त[7]मवलोक्य तद्वधूरभिदधे[8] । तथा च शृङ्गारोचितरसनाकर्षणादिविलासस्मरणं विगलद्धृदयत्वादावेग[9]मधिकं जनयति ।

वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि
दृष्ट्वा दशाननसमागमसंभ्रमेण[10] ।
भूयोऽपि शैलपरिवृत्तिभयेन गाढ-
मालिङ्गितो गिरिजया गिरिशः पुनातु ॥६४॥

अत्र भावस्य रसः । यथा वा—

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।
सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले ॥६५॥

अत्र सुरथविषयो भावो राजविषयरतिभावस्य । एवं भावाभासादीनामपि बोध्यम् ॥

अनुरणनरूपस्यालंकारस्य वाच्याङ्गत्वं यथा—

जनस्थाने भ्रान्तं कनकमृगतृष्णाङ्कितधिया[11]
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना[12]
मयाप्त रामत्वं कुशलवसुता न त्वधिगता ॥६६॥

---

१. After अत्र CD add मम. २ A मरणं श्रेय इत्य।तशयो for मरणमेव श्रेय इत्यनुतापातिशयो. ३ After अथ BC add परस्य. ४ A om, अपि. ५ D लक्ष्यदर्शनं for °दर्शने ६ C om. from °रपतितं upto ° दावेगम०. ७. D करम् for हस्तम्. ८ C B अभिदधौ for ०दधे. ९ D शोकावेगम् for आवेगम्. १० D °समागमनभ्रमेण for ०समागमसंभ्रमेण. ११ D तृष्णान्धितधिया for ०तृष्णाङ्कित०. १२ C रचना for घटना.

अत्र तत्सदृशे तत्त्वारोपस्य चमत्कारित्वाद् वाच्यस्य रामांशस्य[१] शब्द[२]शक्तिमूलं प्रतीयमानं रामेण साम्यमुत्कर्षकम् । अथ कुतो रामत्वं प्राप्तमित्याकाङ्क्षानिवर्तकस्य साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव[३], नापराङ्गत्वमिति चेन्न, जनस्थानभ्रमणादिरूपस्य साम्यस्य शब्दशक्तिमूलव्यङ्ग्यतः प्रागेवावगतौ[४] रामत्वारोपरूपवाच्यत्वासिद्धत्वात्[५] ॥

अनुरणनरूपस्य वस्तुनो वाच्याङ्गत्वं यथा—

आगत्य संप्रति वि[illegible]-
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥६७॥

अत्र व्यङ्ग्योपस्थितिं[६] विनापि सिद्धे रविकमलिनीवृत्तान्ते उभयशक्तिमूलवस्तुरूपनायकवृत्तान्तोऽङ्गम् । न चायमुपमाध्वनिः रूपकध्वनिर्वा किं न स्यादिति वाच्यम्, तथाविधवस्तुन एव काव्यसर्वस्वत्वेनानुभूयमानत्वात् । टीकाकृतस्तु रसस्यापि वाच्याङ्गत्वेऽप्येतदेव [७]तन्त्रेणोदाहरणमिति वदन्ति । तेषामयमाशयः—खण्डितानुनयनलक्षणनायकवृत्तान्ततादात्म्यावगमाक्षिप्तरतिरूपेण रसेन वाच्यस्य रविकमलिनीवृत्तान्तस्योत्कर्षणमिति रसस्य वाच्याङ्गता इति ॥

वाच्यस्य वाक्यार्थस्यानुपपद्यमानस्य सिद्धिरुपपत्तिस्तस्या अङ्गं निदानं वाच्यसिद्ध्यङ्गम् । यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादं च ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥६८॥

अत्र हालाहलं व्यङ्ग्यं भुजगारोपरूपस्य वाच्यस्य सिद्धिकृत् । ननु गरलस्य न व्यङ्ग्यता । प्रसिद्धिवशात्सत्यपि वृष्टिप्रकरणे तदपहस्त्याभिधया विषपदेन द्रागेव

१ BC रामात्वारोपस्य; D रामत्वारोपस्य for रामांशस्य. २ A om. शब्द°. ३ BC °सिद्ध्यङ्गमेव for °सिद्ध्यङ्गत्वमेव. ४ A °वगते; D °वगतो for °वगतौ. ५ BC °वाच्यस्य सिद्धत्वात् for वाच्यत्वासिद्धत्वात्. ६ A °पस्थितो वियोगिनीकम° for °पस्थितिं विनापि सिद्धे रविकम°. ७ AB स्वतन्त्रेण for तन्त्रेण.

गरलोपस्थितेः। यतः प्रकरणात्प्रसिद्धिरेव बलवती। अन्यथा निहतार्थ[1]विलोपः स्यात्। प्रकरणबलादप्रसिद्धार्थस्य प्रागुपस्थितौ तद्दोषस्यानवकाशादिति चेन्न। यत्र प्रसिद्धार्थोपस्थितेरनन्तरमप्रसिद्धार्थे[2] प्रकरणादिकमवतरति तत्रैव तद्दोषस्य लब्धपदत्वात्प्रसिद्धेः प्रकरणमेव बलवत्। तथा च प्रकृते प्रकरणवशादुपस्थिते जले जलदभुजगजन्यत्वमनुपपद्यमानं व्यङ्ग्यं हालाहलमादाय सिद्धयतीति वाच्यसिद्ध्यङ्गता॥

अस्फुटं[3] सहृदयैरपि झटित्यसंवेद्यम्। यथा—

> अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता[4]।
> नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥६९॥

अत्र अदृष्टो यथा न भवसि वियोगभयं च यथा[5] नोत्पद्यते तथा कुर्या इत्यस्फुटम्॥

संदिग्धप्राधान्यं यथा—

> हरस्तु किंचित्परिवृत्तधैर्य-
> श्चन्द्रोदयारम्भ इवाम्बुराशिः।
> उमामुखे बिम्बफलाधरोष्ठे
> व्यापारयामास विलोचनानि॥७०॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा लोचनव्यापारणं वाच्यं प्रधानमिति संदेहः। प्राधान्यं तु चमत्कारप्रयोजकत्वमिति बोध्यम्॥

तुल्यप्राधान्यं यथा—

> ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
> जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥७१॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य[6] वाच्यस्य च समं प्राधान्यम्। तथाहि—अत्र भूत्युपदेशमित्रत्वाभिधानं साम वाच्यम्। उक्तरूपश्च दण्डो[7] व्यङ्ग्यः। उभयोरप्युपदेशस्यानर्थनिवारणत्वेन तुल्यता॥

१ D निहितार्थ० for निहतार्थ°. २ D अप्रसिद्धे for अप्रसिद्धार्थे. ३ A om. °स्फुटं स°. ४ CD विश्लेष० for विच्छेद०. ५ D om. यथा. ६ After व्यङ्ग्यस्य C adds अनर्थनिवारणत्वे. ७ CD व्यङ्ग्यो दण्डः for दण्डो व्यङ्ग्यः.

काक्वाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन[1] ॥७२॥

अत्र मथ्नाम्येवेति व्यङ्ग्यं गुणीभूतम् । अयमभिसंधिः—संधि[2]श्रवणकुपितस्य भीमस्योक्तिरियम् । तथा च प्रतिज्ञातविरुद्धनिषेधाभिधायिषु[3] नञ्सु काकुरियं निषेधान्तराक्षेपिका[4] अभावाभावश्चावधारणम्[5], तस्य च वाच्यसमकालं प्रतीयमानत्वेन[6] गुणीभूतत्वमेव न ध्वनित्वम् । अत एव काकुव्यङ्ग्यस्य[7] पदार्थस्थानीयत्वेनाक्षिप्तपदं झटिति प्रत्यायितपरम् । यत्र[8] काकुतोऽपि विलम्बेनोपस्थितिस्तत्र ध्वनित्वमेव यथोदाहृते 'गुरुः खेदं खिन्ने' इत्यत्र । अत्र काक्वा प्रश्नस्यैव झटित्याक्षेपो न[9] मयि योग्यः खेदः[10] कुरुषु तु योग्य इत्यस्य यतः । असुन्दरं चमत्कारे वाच्यमुखनिरीक्षकं यत्र व्यङ्ग्यम् । यथा 'ग्रामतरुणं[11] तरुण्या' [११] इत्यादि ॥

इत्यष्टौ गुणीभूतव्यङ्ग्यस्य भेदाः कथिताः । एतेषां चान्योन्ययोगाद् ध्वनिभेदैश्च संकरसंसृष्टिभ्यां योगाद्बहवो भेदाः संभवन्ति । संकलनेनास्य ध्वनेस्त्रयो[12] भेदा व्यङ्ग्यस्य त्रिरूपत्वात् । तथाहि—किंचिद्वाच्यतां सहते किंचित्त्वन्यथा । तत्र वाच्यतासहं वस्त्वलंकाररूपम् । रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः । स हि रसादिशब्देन शृङ्गार[13]शब्देनोच्यमानोऽपि कदाचिदपि न चमत्कुरुते इति यावत् । रसादिरित्यत्रादिपदेन भावादीनां[14] परिग्रहः । चित्रभेदास्त्वलंकारनिरूपणावसर एव निरूपयिष्यन्ते । इदं त्ववधेयम्—

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।**
**गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥३६॥**

न तु शब्दस्य चित्रेऽर्थस्याचित्रता अर्थस्य चित्रे वा शब्दस्य । तथा कैश्चिच्छब्दचित्रमेवेष्यते कैश्चिदर्थचित्रमेव । अस्माभिस्तु द्वयमिति ॥

इति [15]काव्यपरीक्षायां काव्यभेदो नाम
द्वितीय उल्लासः ॥

---

१. D परेण for. पणेन. २. D om. संधि°. ३, A °भिधायिनञा for °भिधायिषु नञ्सु. ४. D °न्तरापेक्षिका for °न्तराक्षेपिका, ५. A °श्चावरणं; D चासाधारणं for °श्चावधारणम्. ६. After °मानत्वेन D addr वाच्यानिर्वाह्यत्वाग्रहात्. ७. D °व्यञ्जितस्य for °व्यङ्ग्यस्य. ८. Before यत्र CD add ततश्च. ९. D मयि न for न मयि. १०, A om, खेदः. ११. D reads the whole stanza ग्रामतरुणं etc. १२. A त्रयोदश for त्रयो. १३. D शृङ्गारादिशब्देन for शृङ्गारशब्देन. १४. A भार्यादीनां for भावादीनां. १५. D श्रीकाव्य° for काव्य°.

३

अथ दोषस्वरूपमाह—

येषां ज्ञानाच्चमत्कारो न सम्यगुपजायते ।
सालंकारगुणेऽप्यत्र ते दोषाः परिकीर्तिताः ॥३७॥

अत्र काव्ये । दृष्टो हि लोके सगुणोऽपि सालंकारोऽपि सदोषत्वेन ज्ञातो न तथा[1] चमत्करोति, तथा काव्यमपि । वस्तुतस्तु रसापकर्षजनकज्ञानविषयत्वं दोषत्वम् । अपकर्षस्तु रत्याद्यवच्छिन्नस्य[2] चैतन्यस्य[3] आनन्दांशे लेशेन स्थितिरावरणस्य । यद्यपि सर्वे दोषा वाच्यावचनावाच्यवचनयोर्द्वयोर्दोषयो[4]रेवान्तर्भवितुमर्हन्ति तथापि तयोरेव विषयविशेषदर्शनार्थं विभज्य पदादिदोषानाह—

दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्त[5]मसमर्थम् ।
निहतार्थ[6]मनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् ॥३८॥
संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥३९॥

(१) श्रुतिकटु पदं दुष्टम्, एवं सर्वत्रान्वयः । श्रुतिकटुत्वं च मुख्यार्थापकर्षकत्वे सति ओजोव्यञ्जकवर्णत्वरूपम् । वीरादिष्वदुष्टतया[7] अतिप्रसङ्गवारणाय सत्यन्तम् । न च प्रतिकूलवर्णेनास्यान्यथासिद्धिः । उपधेयसंकरेऽप्युपाधेरसांकर्यात् । तथाहि—अत्र प्रकृतरसव्यञ्जकाभावाद्रसोद्बोधरूपं कार्यं न जायते । प्रतिकूलवर्णे तु प्रकृतरसप्रतिबन्धकैर्वर्णैः प्रतिरुध्यते इत्यनयोर्भेदः । वर्णानां रसव्यञ्जकत्वं तत्प्रातिकूल्यं च वक्ष्यते ।

---

१. C om. from ०था चमत्करोति upto चैत०. २. D ०वच्छिन्नचैतन्यस्य for ०च्छिन्नस्य चैतन्यस्य. ३. A om. चैतन्यस्य. ४. A om. दोषयोः ५. C अयुक्तं for अप्रयुक्तं. ६. C नहतार्थं for निहतार्थं. ७. A वीरादाविष्टतया for वीरादिष्विष्टतया.

यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा[1] ॥७३॥

अत्र कार्तार्थ्यमिति ॥

(२) च्युतसंस्कृति[2] व्याकरणव्युत्पत्तिहीनम् । असाध्विति यावत् । यथा—

प्रजा इवाङ्गादरविन्दनाभेः
शंभोर्जटाजूटतटादिवापः ।
मुखादिवाथ श्रुतयो विधातुः
पुरान्निरीयुर्मधुजिद्ध्वजिन्यः ॥७४॥

अत्र अरविन्दनाभेरिति । ग्रास गाम इत्यादि वा । अत्र असाधुष्वज्ञानादन्वयबोधस्थगनमेव दूषतावीजम् ॥

(३) अप्रयुक्तं यदाम्नातमप्यभियुक्तैर्निषिद्धप्रयोगम् । यथा[3]—

यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो वाथ[4] राक्षसः ॥७५॥

अत्र दैवतशब्दो दैवतानि पुंसि चेति आम्नातोऽप्यालंकारिकैर्निषिद्धप्रयोगः । अत्र अभियुक्तसमयोल्लंघनप्रयोजनाभि[5]संधानान्मुख्यार्थप्रतीतिमान्थर्यं दूषकतावीजम् ॥

(४) असमर्थं उपसंदानं विनानुशिष्टार्थाबोधकम् । यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्क्रियः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति[6] सादरम् ॥७६॥

अत्र हन्तीति गमनार्थम् । उद्धति[7]पद्धतीत्यादावुपसंदानेन गतिबोधकत्वेन तत्पाठवैफल्यं[8] गमनबोधं प्रति स्वरूपायोग्यत्वं दूषकतावीजम् ॥

(५) निहतार्थं तद्यत्प्रसिद्धार्थप्रतीतिव्यवधानेनाप्रसिद्धार्थस्य शक्त्या बोधकम् । सामग्रीसाद्गुण्येन[9] प्रागप्रसिद्धार्थ[10]प्रतीतौ[11] नायं दोषः । शक्त्येति विशेषणादप्रसिद्धशक्यव्यञ्जके नायं दोषः ।

---

१ A कथा for कदा. २ A व्याकरणच्युति० for च्युत०. ३ A om. यथा. ४ CD राक्षसोऽथ वा for वाथ राक्षसः. ५ A ०भिधानात for ०भिसंधानात्. ६ A om. संप्रति. ७ D उद्धतीत्यादौ for उद्धतिपद्धतीत्यादौ. ८ AD ०पाठवैकल्यं for ०पाठवैफल्यं. ९ A om. सामग्री०. १० A प्रसिद्धार्थप्रतीतौ for प्रागप्रसि०. ११ D ०प्रतिपत्तौ for प्रतीतौ.

यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥७७॥

अत्र शोणितपदम् । अत्र रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयत इति प्रकृतार्थप्रतीतिमान्थर्यं दूषकताबीजम् ॥

(६) अनुचितार्थं प्रकृत[1]विरुद्धार्थम् । यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो[2]
रणाश्वमेधे पशुतामुपागताः ॥७८॥

अत्र पशुपदमुपश्लोक्यमानस्य कातरतामभिव्यनक्तीत्यनुचितार्थम् ॥

(७) निरर्थकं अर्थः प्रयोजनं प्रकृतार्थस्वादपरिपोषणं तद्रहितम् । यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु जननि[3] भवत्याः प्रसादेन ॥७९॥

अत्र हिपदम् । निराकाङ्क्षत्वं दूषकताबीजम् ॥

(८) अवाचकं संकेतविरहादबोधकम् । असमर्थे[4] नासंकेतः, लाक्षणिके[5] नाबोधकत्वमिति न तयोः प्रसङ्गः । यथा—

अवन्ध्यकोपस्य विहन्तु[6]रापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषा दरः ॥८०॥

अत्र जन्तुपदमदातृत्वे प्रयुक्तम्, तत्र च नाभिधायकम् । न च तात्पर्यानुपपत्त्या लक्षणया बोधकमिदमस्त्विति वाच्यम्, यदा प्रयोजनप्रतिपिपादयिषाविरहाल्लक्षणाया[7] अनवसरस्तदास्य दूषकत्वात् ॥

---

१ D प्रकृतार्थविरु० for प्रकृतविरु०. २ D तपस्विनो for यशस्विनो. ३ D भगवति युष्मत्प्रसादेन for जननि भवत्याः प्रसादेन. ४ D असमर्थैः for ०मर्थे. ५ D लाक्षणिकैः for °क्षणिके. ६ D निहन्तुः for विहन्तुः. ७ D लक्षणया नावसरस्तदा सुविभक्तावप्यस्य दूषणत्वात् for लक्ष...दूषकत्वात्.

( ९ ) त्रिधेति व्रीडाजुगुप्साऽमाङ्गल्यव्यञ्जकत्वात्। सभ्यवशीकरणसंपत्तिः श्रीः, तां लातीति, रश्रुतेर्लश्रुतिरित्यनेन। न[1] श्लीलमश्लीलम्। एतदेवात्र दूषकताबीजम्। क्रमेण यथा—

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥८१॥

मञ्जुमन्थरगतिः पयोमुचां
शीकरौघवहनश्रमादिव।
केतकीवनविहारकौतुकी
वायुरायुरभवन्मनोभुवः ॥८२॥

पितृवसतिमहं व्रजामि तां
सह परिवारजनेन यत्र मे।
भवति सपदि पावकान्वये
हृदयमशेषितशोकशल्यकम् ॥८३॥

एतेषु[2] साधनवायुपितृवसतिशब्दा व्रीडादिव्यञ्जकाः॥

(१०) संदिग्धं तात्पर्यसंदेहास्पदीभूतार्थद्वयोपस्थापकम्। यथा—

आलिङ्गितस्तत्रभवान्संपराये जयश्रिया।
आशीःपरंपरां वन्द्यां कर्णे कृत्वा[3] कृपां कुरु ॥८४॥

अत्र वन्द्यामिति किं वन्दीकृतायां किं वा[4] नमस्यायां प्रयुक्तमिति संदेहः। अत्र अर्थानिश्चय एव दूषकताबीजम्॥

( ११ ) अप्रतीतमिति प्रति प्रतिशास्त्रे इतं ज्ञातम्, न प्रतीतमप्रतीतम्। यत्किंचिच्छास्त्रपरिभाषितमित्यर्थः। यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम् ॥८५॥

अत्र आशयशब्दो वासनापरपर्यायो योगशास्त्र एव प्रसिद्धः[5]। विरलप्रयोगत्वेन झटित्यर्था[6]प्रत्यायकत्वमेव दूषकताबीजम्॥

---

१ D om. न. २ D एषु for एतेषु. ३ D श्रुत्वा for कृत्वा. ४ C om. किं वा नमस्यायां.
५ After प्रसिद्धः D adds इति. ६. BC झटित्यप्रत्या० for झटित्यर्थाप्रत्या०.

(१२) ग्राम्येति। ग्राम्योऽविदग्धः, तदायुक्तं ग्राम्यम्। यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम्।
तपनीयशिलाशोभा कटिश्च हरते मनः॥८६॥

अत्र कटिरिति। श्रोणीनितम्बादिकमौपनागरिकम्, कटिपदं त्वविदग्धमात्रप्रयोज्यम्। वक्तुरविदग्धतानुसंधानं रसस्यापकर्षकमनुभव[1]सिद्धं तदेव दूषकताबीजम्। अत्र कटिपदे अश्लीलत्वसंभवेऽपि उपाधेरसंकरा[2]दापवार्थक्यम्॥

(१३) नेयार्थं तद्यद्रूढिप्रयोजनाभ्यां विना आभासरूपया लक्षणया प्रयुक्तम्। यथा—

वक्त्रवैडूर्यचरणैः प्रातर्युक्तं नभस्तलम्।
काश्मीररागालसितं विष्णोर्वक्ष इवावभौ॥८७॥

वक्त्रवैडूर्यचरणैरित्यम्बररत्नपादैरित्यर्थे नेयार्थम्। दूषकताबीजं तु [3]कवेरव्युत्पत्तिप्रतिसंधानेन वैरस्यापादकत्वम्। अथ समासगतमेव[4] दुष्टमिति संबन्धः। अन्यत्तु केवलं समासगतं च॥

(१४) क्लिष्टं तद्यतो वाक्यार्थप्रतीतिर्विलम्बिता भवति। निहतार्थे पदार्थोपस्थितिरेव विलम्बितेति ततोऽस्य[5] भेदः। यथा—

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम्॥८८॥

अत्र अत्रिलोचनसंभूतस्य चन्द्रस्य[6] ज्योतिरुद्गमनेन[7] भासिभिः कुमुदैरित्यर्थः। तथा च सामान्यशक्तात्पदात्प्रकरणाद्यवतारविलम्बेन विलम्बाद्विशेषस्य कुमुदस्योपस्थितिरिति क्लिष्टत्वम्॥

(१५) अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तदविमृष्टविधेयांशम्। प्राधान्यं तु विधेयताप्रतीतियोग्यत्वम्। तदुक्तम्—

यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता।
तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता॥

---

१ A अनुभाव० for अनुभव०. २ A असंभवात् for असंकरात्. ३ A om. कवे... ०दकत्वम्. ४ D om. एव. ५ ABD अस्या for अस्य. ६ D om. चन्द्रस्य. ७ C उद्गमेन for उद्गमनेन.

तथा—उद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तत्र प्राप्तमुद्दिश्या[1]प्राप्तं विधीयते पर्वतो वह्निमानितिवत्[2]। नतु समासे। अन्यथा वह्निमत्पर्वत इत्याद्यभिधीयेत। यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा[3]-
धौतेशांघ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्[4]।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः॥८६॥

अत्र महिम्नो मिथ्यात्वं नानुवाद्यमपि तु विधेयम्। अन्यथा यदि तदैव मिथ्यामहिमत्वं जातं तदा इदानीं नगरीरक्षणे प्रयासो नानुचितः। यदि विधेयं स्यात्तदा तादृशेनापि कर्मणा यन्महत्त्वं तदाभूत्तदिदानीं मिथ्या बभूव, यतः स्वनगरीरक्षणेऽप्यसामर्थ्यमिति प्रतीतिः सिध्यति। तच्च मिथ्यात्वं बहुव्रीहावन्यपदार्थप्रधाने[5] गुणी[6]भूतमित्यविमृष्टविधेयांशता॥

(१६) विरुद्धमतिकृत् तद्यत्तात्पर्यविषयीभूतार्थधीप्रतिबन्धकीभूतासभ्यार्थधीजनकम्। अनुचितार्थाश्लीलयोरर्थानां न परस्परप्रतिबन्धकता। निहतार्थे विलम्बेन प्रतीतिरिति तेभ्यो भेदः। यथा—

सुधाकरकराकारविशारदविचेष्टितः[7]।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे॥९०॥

अत्र कार्यं विना मित्रमिति विवक्षितः[8], अकार्येषु मित्रमिति तु प्रतीयते। अव्ययीभावे लक्षणानुसंधानविलम्बात्, कर्मधारयेण[9] झटिति कुकार्यप्रतीतेः। समासावयवस्य नञो निन्दार्थकत्वात्। तदुक्तम्—

तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता[10]।
अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः॥

---

१. ABD उद्देश्य for उद्दिश्य. २. A वह्निमान्धूमादितिवत् for वह्निमानितिवत्. ३. D ०संयुक्त० for ०संसक्त०. ४. D ०महिम्ना for ०महिम्नाम्. ५ D ०प्रधानं for ०प्रधाने. ६. D om. गुणीभूतम्. ७. A ०विचेष्टितैः for ०विचेष्टितः. ८. D विवक्षितं for विवक्षितः ९. A तत्पुरुषेण for कर्मधारयेण. १०. D om. from विरोधिता upto लोचनानन्द.

यथा वा—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥६१॥

अत्र गलग्रहो रोगविशेषः । तत्र च समुदाये शक्तिरालिङ्गने च योगः । समुदायशक्तेर्बलवत्त्वाद्रोगस्य[1] झटिति प्रतीतिरिति[2] विरुद्धमतिकारिता ॥ यथा वा—

अपि यः स्वयं विषादी हरति विषादं प्रपन्नानाम् ।
ईशोऽपि भैक्ष्यवृत्तिर्जगद्भवानीपतिः सोऽव्यात् ॥६२॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं जनयति[3] । अन्यथा भव इत्येवाभिदध्यात्[4] ॥

( १७ ) श्रुतिकटु समासगतं[5] यथा—

सा च दूरे सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥६३॥

एवमन्यदपि ज्ञेयम् ॥

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥४०॥**

केचन, न पुनः सर्वे ॥ एते पददोषाः साकाङ्क्षनानापदवृत्तयो यदि भवन्ति तदा वाक्यदोषा इत्युच्यन्ते । यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स दीर्घाक्ष्या कार्तार्थ्यं लभते कदा ॥६४॥

एवमन्ये सुगमा इति नोदाहृताः ॥

क्लिष्टादित्रय[6]मुक्तक्रमेणोदाह्रियते—

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥६५॥

---

१. D रोगस्यैव for रोगस्य. २. D प्रतीतेरिति for प्रतीतिरिति. ३. CD करोति for जनयति. ४. After अभिदध्यात् D adds : वस्तुतस्तु इदं न चारु, यतो भवानीशब्दो दुर्गात्वप्रकारकमेव बोधं करोति । अन्यथा दुर्गाशब्दादिना भवानीशब्दादीनां पर्यायत्वं न स्यात् । योगस्तु साधुत्वार्थः । यथा गोघटादिशब्देषु तेन योगेनापि घटादिशब्देष्विव न तत्तदर्थप्रतिपत्तिरिति बोध्यम्. ५. A समासगं for समासगतं. ६. BD ०त्रयं तु क्रमेणो० for ०त्रयमुक्तक्रमेणो०.

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥६६॥

अत्र अयमेव न्यक्कार इति वाच्यं, तथैव न्यक्कारस्य विधेयत्वप्रतीतेः[1] । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न तु[2] वाक्यार्थस्येति । किं च । खण्डवाक्यार्थबोधदशायामेवायं दोषो न तु महावाक्यार्थबोधदशायाम् । तदा[3] समूहालम्बनपदस्मृतौ विधेयस्योद्देश्यस्य च पौर्वापर्यबोधविरहात् ॥

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रह[4]क्षपणेनाद्य शेरते ते गतासुखाः ॥६७॥

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति प्रतीतिः[5] । अथ पदैकदेशे यथासंभवमुदाहरणम्[6] ॥

अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥६८॥

अत्र त्वादिति कष्टम् ॥

यश्चाप्सरोविभ्रममण्डनानां
संपादयित्रीं शिखरैर्बिभर्ति ।
वलाहकच्छेदविभक्तरागा-
मकालसंध्यामिव धातुमत्ताम् ॥६९॥

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन[7] च ततः संतापितानां दृशाम् ।

---

१. D विधेयताप्रतीतेः for विधेयत्वप्रतीतेः. २. D om. तु. ३. A om. तदा. ४. D विरह० for विग्रह० ५. A विरुद्धप्रतीतिः for प्रतीतिः ६. D उदाहरणानि for उदाहरणम्. ७. C विरहानिलेन for ०नलेन.

संप्रत्येव निषेकमश्रुपयसा[१] देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥१००॥

अत्र दृशामिति बहुवचन[२]मनर्थकम्, कुरङ्गेक्षणाया एकस्या एवोपादानात्। न च व्यापारेऽत्र दृक्शब्दो वर्तते, अञ्जनलेपादीनां[३] तत्रासंभवात् ॥

अयमेकपदे तया वियोगः
प्रियया चोपगतः[४] सुदुःसहो मे ।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः ॥१०१॥

अत्र भवितव्यमिति भूतमित्यर्थेऽवाचकम् ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः[५]
परमार्थतः स[६] हृदयं वहति पुनः कालकूटघटितमिव ॥१०२॥

अत्र पेलवशब्दः ॥

यः पूयते सदा स्नात्वा सुरस्रोतस्विनीजले ।
अस्माकं भाग्यवशतः सोऽयं नयनगोचरः ॥१०३॥

अत्र पूयशब्दः ॥

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमेष[७] स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥१०४॥

अत्र प्रेतशब्दः ॥

कस्मि[८]न्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्[९] ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥१०५॥

अत्र किं पूर्वं साधुरुत साधुपु चरतीति संदेहः ॥

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥१०६॥

अत्र वचःशब्देन गीःशब्दो[१०] लक्ष्यते । अत्र पूर्वपदवदुत्तरपदमपि परिवर्तनं[११] न सहते । जलध्यादौ तूत्तरपदमेव ॥

---

१. C °पयसो for °पयसा. २. A निरर्थकम् for अनर्थकम्. ३. A °लेपनादीनां for °लेपादीनां. ४. D चोपनतः for चोपगतः. ५. A शब्दम् for शठः ६. A तु for स. ७. A कथमद्य for कथमेष. ८. A यस्मिन् for कस्मिन्. ९. A नोत्तपते परं for नोत्तपतेतराम्. १०. D गीतशब्दो for गीःशब्दो. ११. D पर्यायपरिवर्तनं for परिवर्तनं.

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ।**
**न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥४१॥**
**अपदस्थपदसमासं विमतपरार्थं प्रसिद्धपरिहीनम्[१] ।**
**भग्नप्रक्रममभवन्मतयोगं वाक्यमेव यथा ॥४२॥**

(१) रसानुगुणत्वं च वर्णानां वक्ष्यते। तद्विपरीतत्वं प्रतिकूलत्वम्। यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥१०७॥

अत्र मधुरवर्णत्वमुचितम्। तथा रौद्रे तु[२]दाहृते 'कृतमनुमतम्' [२२] इत्यादौ विकटवर्णत्वं दीर्घसमासत्वं चोचितम्[३] ॥

(२) ओत्वं प्राप्तो लुप्तो[४] वा विसर्गो यत्र तदुपहतलुप्तविसर्गम्। यथा—

धीरो विनीतो निपुणो निर्विकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता[५] बुद्धिप्रभाविताः ॥१०८॥

अत्रैतयोर्नैरन्तर्येणानेकस्थानोपहतलुप्तविसर्गत्वेनैव[६] दूषकता। तथा उपहतेत्यादिचतुर्षु पतत्प्रकर्षे च बन्धशैथिल्यमेव दूषकताबीजम् ॥

(३) संधेर्वैरूप्यं विश्लेषः। यथा—

राजन्विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले[७] अतितते उचितानुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥१०९॥

अत्र संहितां न करोमीति स्वेच्छया सकृदपि दोषः। प्रगृह्यादिहेतुके तु असकृत् ॥

(४) हतवृत्तं जातयतिभङ्गं रसाननुगुणं च वृत्तम्[८]। क्रमेणोदाहरणे[९]—

अमृतममृतं कः संदेहो मधून्यपि[१०] नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो[११]
वदतु यदिहान्यत्स्वादु स्यात्प्रियारदन[१२]च्छदात् ॥११०॥

---

१. D °परिहतम् for परिहीनम्. २. D om. तु. ३. D उचितम् for चोचितम्. ४. D om. लुप्तो. ५. A भक्त्या for भक्ता. ६. ABC °हतविसर्ग° for °हतलुप्तविसर्ग°. ७. AD श्रीदोर्बले for धीदोर्बले. ८ After वृत्तम् D adds यत्. EBD उदाहरणं for °हरणे १० D om. मधून्यपि नान्यथा. ११. C जना for जनो. १२. A °दशन° for °रदन°.

अत्र यदिहान्यत्स्वादु स्यादिति यतिभङ्गादश्रव्यम् ॥

हा नृप हा बुध हा कविबन्धो
विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्ध[1]सभान्तररत्न
क्वासि गतः क वयं च तवैते ॥१११॥

हास्यव्यञ्जकमेतद् वृत्तम् ॥

( ५ ) न्यूनपदं यथा—

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मयि[2] पश्यसि
त्यजसि मानिनि दासजनं यतः ॥११२॥

अत्र अपराधलवमपीति वाच्यम् । अत्र दूषकताबीजं स्फुटमेव ॥ पराभिमतस्यानभिहित[3]वाच्यस्य न्यूनपद एवान्तर्भावः ॥

( ६ ) अधिकपदं यथा—

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥११३॥

अत्र कृतमिति । कृतं प्रत्युत प्रक्रमभङ्ग[4]मावहति । अत्राकाङ्क्षाविरहः स्फुट एव । स एव दूषकताबीजम् ॥

( ७ ) कथितपदं यथा—

अधिकर[5]तलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीला[6]यौवराज्याभिषेकम् ॥११४॥

अत्र लीलेति । अत्र पिष्टपेषणवदचमत्कारित्वमेव[7] दूषकताबीजम्[8] ॥

---

१. D om. ०विदग्ध०. २. D मम for मयि. ३. D अनहित० for अनभिहित०. ४. CD क्रमभङ्गं for प्रक्रमभङ्गं. ५. D अधिकतरल० for अधिकरतल०. ६. After ०लीला० D adds व्यञ्जयत्यञ्जसैव ( cf C above ). ७. D चमत्कारित्वम् for अचमत्कारित्वम्. ८. After दूषकताबीजम् D adds : वस्तुतस्तु सत्यप्यर्थभेदतात्पर्ये पदैकत्वदोषादर्थैक्यप्रतिभास एव दूषकताबीजम् । तथा च 'उदयति सविता ताम्रस्ताम्र एवास्तमेतीतिवत् या स्वापलील व यौवराज्याभिषेकं व्यञ्जयतीत्यभेदप्रतीतिः स्यात् । अत्र तु द्वितीयलीलापदमवश्यवशीकरणपरम्.

(८) पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥११५॥

(९) समाप्तपुनरात्तं यत्र विशेष्यं समाप्तं जनितान्वयबोधं पुनरात्तमावृत्तं तत्। यथा—

क्रेङ्कारः[1] स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रति[2]मञ्जरीमधुलिहां लीलाचकोरीध्वनिः।
तन्व्याः कञ्चुलिका[3]पसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुध्वनिः[4] ॥११६॥

ननु अत्र क्रियाकारकभावेनान्वये[5] जाते पुनर्विशेषणान्वये निराकाङ्क्षत्वमेव दूषकताबीजं वाच्यम्, तत्तु न घटते। विशेषणांशे तात्पर्यसत्त्वेन तात्पर्यविषयीभूतान्वयबोधाजननेन तद्घटिताकाङ्क्षायाः सत्त्वादिति चेत्साध्ववोचः। किं त्वत्र तात्पर्यग्राहकमुत्कटं नास्तीति तद्ग्रहविलम्बेनान्वयबोधविलम्ब एव दूषकताबीजम्। यत्र तु तद्ग्राहकमस्ति तत्र नेदं दूषणम्। यथा 'नववयोलास्याय गीतं तथा'। अत्र तथेत्यस्योत्कटग्राहकस्य सत्त्वात्। एवं 'अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः' इत्यत्र प्रमाणाधिक्येनैव श्वासस्य वेपथुजननात्क्रियान्वयेऽपि[6] न वाक्यस्य समाप्तिः[7]। एवमन्यत्रापि बोध्यम्॥

(१०) अपदस्थपदं[8] यथा[9]—

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥११७॥

---

१ D क्रोंकारः for क्रेङ्कारः. २ D मधुमञ्जरी° for रतिमञ्जरी°. ३ D कंचलिका° for कञ्चुलिका°. ४ D वेणुस्वनः for °ध्वनिः. ५ D अन्वयैर्बोधे for अन्वये. ६ D क्रियाद्वयेऽपि for °न्वयेऽपि. ७ D वाक्यसमाप्तिः for वाक्यस्य समाप्तिः. ८ After °पदं CD add अस्थानस्थपदं ९ D यद्वा for यथा.

अत्र त्वंपदानन्तरं चकारो युक्तः, तदैव तस्याः समुच्चेयता[१] स्यात् ॥ इदमत्रावधेयम्—अर्थान्तरैकवाचकं[२] यत्र द्वितीयार्धैकवाचकशेषं[३] प्रथमार्धं[४] तत्। तथा संकीर्णं यत्र वाक्यान्तरपदानि वाक्यान्तरेऽनुप्रविशन्ति तत्। तथा गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति तत्। तथा अक्रमं यत्र[५] यदुत्तरं यत्पदोपादानमुचितं तदन्यत्र तदुपादानं तत्। एतानि चत्वारि परैरभ्युपगतानि दूषणानि अस्मिन्नपदस्थपद एवान्तर्भूतानि। संकीर्णस्य क्लिष्ट एवान्तभाव इति केचित् ॥

(११) अपदस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष[६] धिगिति क्रोधादिवालोहितः।
उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
त्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥११८॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः। कवेरुक्तौ तु कृतः[७] ॥

(१२) विमतः प्रकृतविरुद्धः परार्थो यत्र तद्विमतपरार्थम्। यथा—

राममन्मथशरेण ताडिता
दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥११९॥

अत्र प्रकृतरस[८]विरुद्धः शृङ्गारस्य व्यञ्जकः[९] परार्थः ॥

(१३) प्रसिद्धादन्यत्र प्रयुक्तं प्रसिद्धिहीनम्[१०]। यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुता[११]नुकारी मुहुः।
रवः[१२] श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः[१३] पुरः ॥१२०॥

अत्र रवो मण्डूकादिध्वनिषु प्रसिद्धो न तूक्तरूपे सिंहनादे ॥

---

१ D समुच्चयता for समुच्चेयता. २ C अर्थान्तरैक° for अर्धान्तरैक°. ३ A ०वाचकं शेषं for वाचकशेषं. ४ D प्रथमार्धे for ०मार्धं. ५ AC यत्र यत्पदं यदुत्तरोपादान० for यत्र यदुत्तरं यत्पदोपादान०. ६ D एव for एष. ७ D न कृतः for कृतः. ८ D ०रसाविरुद्धः for ०रसविरुद्धः. ९ CD व्यञ्जकोऽपरोऽर्थः for व्यञ्जकः परार्थः. १० D प्रसिद्धिपरिहीनम् for प्रसिद्धिहीनम् ११ CD ०प्रतिरवा० for प्रतिरुता०, १२ D वचः for रवः. १३ D अभीत° for अभूत°.

सुसितवसना[1]लंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः[2] ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का[3] क नासि शुभप्रदः ॥१२१॥

अत्र अमूर्तापि कीर्तिर्ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ॥

(१४) भग्नः प्रक्रमः प्रस्तावो यत्र तत्तथा । यथा—

नाथे निशाया नियतेर्नियोगा-
दस्तं गते हन्त निशापि याता ।
कुलाङ्गनानां हि दशानुरूपं
नातः परं भद्रतरं समस्ति ॥१२२॥

अत्र [4]गतेति प्रक्रान्ते यातेति प्रकृते प्रक्रमो भग्नः । 'गता निशापि' इति युक्तम् । ननु कथितपदस्य दुष्टत्वाभिधानात्कथमेकस्य पदस्य[5] द्विः प्रयोग इति चेदुच्यते । उद्देश्यप्रतिनिर्देश्यव्यतिरिक्त एव विषयः एकप्रयोग[6]निषेधस्य, प्रत्युत तादृशि विषये तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं[7] विना दोषः । तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥१२३॥

अत्र रक्त एवेति यदि क्रियेत[8] तदा[9] प्रतिपादित एवार्थः अर्थान्तरतयैव[10] भासमानो नैकरूप्यमावहति । ननु पर्यायशब्दानां शक्यतावच्छेदकैक्यनियमात्कथमन्यत्वेन प्रतीतिरिति चेदुच्यते । यन्मते शाब्दे[11] बोधे शब्दो भासते तन्मते रक्तादिशब्दान्तरस्य भानादैकरूप्यासंभवात् ॥

(१५) अभवन्मतः इष्टः योगः संबन्धो[12] यत्र तत्तथा । विवक्षितसंबन्धबोधं प्रति स्वरूपायोग्यमिति यावत् । तेन विधेयाविमर्शे[13] नातिव्याप्तिः । तत्र रचनान्यत्वेन संबन्धोपपत्तेः । यथा—

---

१ A °वचना° for °वसना°. २ D विभुः for विधुः. ३ D मुक्ताशङ्कं for मुक्ताशङ्का. ४ A गतेतिक्रान्ते for गतेति प्रक्रान्ते. ५ D om. पदस्य. ६ D एकपदाद्विःप्रयोग° for एकप्रयाग°. ७ C योगं for प्रयोगं. ८ C क्रियते for क्रियेत. ९ After तदा CD add पदान्तर°. १० D °तयेव for तयैव. ११ D शाब्दबोधे for शाब्दे बोधे. १२ A बन्धः for संबन्धः. १३ D °विमर्षे for °विमर्शे.

येषां[१] ताख्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
लीलापानभुवश्च नन्दन[२]तरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोष[३]कारि विहितं किंचित्प्रवादोचितम् ।।१२४।।

अत्र यैरित्यत्र विशेष्यस्याप्रतीतिः। क्षपाचारिभिरिति पाठे युज्यते संबन्धः। यावद्यत्पदार्थ[४]परामर्षकतत्पदेन सह[५] विशेष्यभावोपपत्तौ सकलयदर्थक्षपाचारिणो[६]रभेदान्वयस्य न्याय्यत्वात् ।। यथा वा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे[७] जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ।।१२५।।

अत्र दण्डपादगता निजतनुः प्रतीयते। भवानीसंबन्धिनी तु विवक्षिता। निजस्वात्मादिशब्दानां प्रधानक्रियान्वितान्वयित्वव्युत्पत्तेः ।।

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ।
संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्तः ।
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।।
विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ।।

इत्येते प्राचीनैरर्थदोषाः कथितास्ते उक्तेषु शब्ददोषेषु अन्तर्भवन्तीति न पृथक् प्रतिपादिताः। तथाहि—पुष्टं पोषणमुत्कर्षः। पश्चान्न विद्यते पुष्टं यत्रेति नञ्समासः। तथा च प्रकृतवाक्योद्देश्योत्कर्षाहेत्वर्थरूपापुष्टार्थस्याधिकपदे निरर्थके वान्तर्भावः। यथा—

१ D एषां for येषां. २ AD चन्दन० for नन्दन०. ३ A तत्परितोष० for त्वत्परितोष०. ४ CD यदर्थ० fof यत्पदार्थ०. ५ After सह D adds क्षपाचारिभिरित्यस्य विशेषणविशेष्य०. ६ D अप्यभेदा० for अभेदा०. ७ CD नृत्यानुकारे for नृत्तानु०.

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥१२६॥

अत्र अतिविततत्वादयोऽर्था अपुष्टा इति युक्तोऽस्याधिकपदे निरर्थके वान्तर्भावः ।

तथा कष्टस्य क्लिष्टेऽन्तर्भावः । यथा—

सदा मध्ये यासामियममृतनिःस्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥१२७॥

अत्र अर्थे[1] प्रतीतिविलम्बेनेति क्लिष्टेऽन्तर्भावः समुचितः । अस्यार्थः । अमृतं सुधा जलं च । रसो माधुर्यं शृङ्गारादिश्च । सरस्वती वाणी नदी च । मार्गो रीतिः पन्थाश्च । परिमलं चमत्कारं[2] सुखं च । प्रसादं सुव्यक्तत्वं स्वच्छकान्तिश्च । घनो निबिडो मेघश्च । परिचिता अत्यन्ताभ्यस्ताः संबद्धाश्च । रुचयोऽभिसंधयः कान्तयश्च[3] । महतां कवीनामादित्यानां च । तेषां द्वादशत्वात् । एवं स्तुत्वा निन्दित्वा वा पुनरन्यथाकृतरूपस्य व्याहतस्य अनुचितार्थ एवान्तर्भावः । यथा—

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥१२८॥

अत्र [4]नवेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतस्यानुचितार्थेऽन्तर्भावः । एवं पुनरुक्तस्याधिकपदे निरर्थके वान्तर्भावः उचितः[5] । पुनरुक्तोदाहरणं तु 'कृतमनुमतम्' इत्यादि । अत्रार्जुनेति । भवद्भिरिति चोक्ते किरीटिपदार्थः पुनरुक्त इति युक्तोऽधिकपदे निरर्थके वान्तर्भावः ।

तथा दुष्क्रमस्यानुचितार्थे । यथा—

---

१ BD अर्थप्रतीतिः for अर्थे प्रतीतिः. २ D चमत्कारः for °त्कारं. ३ A कान्तिश्च for कान्तयश्च. ४ D om. नव. ५ A om. उचितः.

भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव[1] ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥१२९॥

अत्र मातङ्गस्य प्राङ् निर्देश उचित[2] इति इदमनुचितार्थम्[3] । एवं ग्राम्यो ग्रामसंभवोऽविदग्धप्रतिपादितः स्वरिरंसादिस्तस्याप्यनुचिता[4]र्थेऽन्तर्भावः । यथा—

स्वपिति यावदयं[5] निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
तदयि[6] सांप्रतमाहर कूर्परं[7]
त्वरितमूरुमुदञ्चय कुञ्चितम् ॥१३०॥

इदमप्यनुचितार्थम् । तथा संदिग्धस्य संदिग्ध एवान्तर्भावः । यथा 'आलिङ्गित-स्तत्रभवान्' इत्यादि । एवं निर्हेतोर्न्यूनपदे । यथा—

गृहीतं येनासीः परिभवभयान्नोचितमपि[8]
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥१३१॥

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्तः[9] इति न्यूनपदेऽन्तर्भावः । एवं प्रसिद्धिविरुद्ध-स्यानुचितार्थेऽन्तर्भावः । उदाहरणं[10] पूर्वमेव प्रसिद्धिपरिहीने 'महाप्रलयमारुत' इत्यादि दत्तं तदेव मन्तव्यम् । अत्र रवशब्दः सिंहनादेऽनुचित इत्यनुचितार्थम् । विरुद्धस्या[11]प्यनुचितार्थेऽन्तर्भावः । यथा—

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥१३२॥

अत्र ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रे निषिद्ध[12]मितीदमप्यनु[13]-चितार्थम् । एवमेकभङ्गीनिर्दिष्टानेकार्थत्वरूप[14]मनवीकृतत्वं न दोषः, किं तु गुणा-भावः ।

---

१ D प्रथितोत्सवः for °त्सव. २ D न्याय्यः for उचितः. ३ C अनुचितार्थः for °र्थम्. ४ C om. from चितार्थे upto कुञ्चि. ५ D यावदियं for यावदयं. ६ D तदपि for तदयि. ७ D रूपकं for कूर्परं. ८ BC °भयान्नोज्झितमपि; D °भयान्मोचितमपि for °भयान्नोचितमपि. ९ D नोपात्तः for नोक्तः, १० After °हरणं C adds तु. ११ D विद्याविरुद्धस्य for विरुद्धस्य. १२ D विरुद्धम् for निषिद्धम्. १३ D अनुचितार्थे for °तार्थम्. १४ अनेकार्थस्वरूप° for °र्थत्वरूप°.

उक्तिवैचित्र्यात्मकमाधुर्यस्य[1] नवोक्तत्वरूपस्य गुणस्य वक्ष्यमाणत्वात्। अतोऽत्र[2] गुणाभावादेव रसापकर्षः इति। यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम्।
संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्॥१३३॥

तथा नियमपरिवृत्तस्यापि न्यूनपद एवान्तर्भावः। नियमस्य शब्दादप्रतिपत्तिर्नियमपरिवृत्तिः। यथा—

यत्रा[3]नुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा।
याताः प्राणभृतां मनोरथगतीरुल्लंघ्य यत्संपद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम्॥१३४॥

अनुल्लिखिताख्यमनिर्दिष्टनामकम्। अत्र 'च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति सनियमत्वं वाच्यम्। तथा कृते गुणान्तरव्यवच्छेदेन निन्दातिशयप्रतीतिः[4]। प्राकृतमणेस्तु गणनायां चिन्तामणेर्गणनमनुचितमित्यर्थः। कवितात्पर्यविषयः सिध्यति॥ तथा अनियमपरिवृत्तस्याधिकपदे। अविवक्षितनियमस्य शब्देन प्रतिपादनमनियमपरिवृत्तिः। यथा—

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः॥१३५॥

अत्र शोण एवेति नियमो न वाच्यः। पिपासोर्जलमात्राभिलाषेणेतरव्यवच्छेदस्याविवक्षितत्वात्॥ तथा विशेषपरिवृत्तस्य न्यूनपदे। यथा—

---

१ A om, °माधुर्य°. २ D om. अत्र. ३ D यस्य for यत्र. ४ D °प्रतीतेः for °प्रतीतिः.

श्यामां श्यामलिमान[1]मानयत भोः सान्द्रैर्मषीकूर्चकै-
मन्त्रं तन्त्रमथ[2] प्रयुज्य हरत श्वेतोत्पलानां श्रियम्[3] ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥१३६॥

अत्र श्यामामित्यत्र ज्योत्स्नामिति विशेषो वाच्यः ॥ तथा अविशेषपरिवृत्तस्यापि न्यूनपदे । यथा—

कल्लोल[4]वेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥१३७॥

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्यं वाच्यम् । अन्यथा विशेषस्य कौस्तुभस्योपकारित्वे सामान्येषु कथमादरः स्यादिति ॥ तथा साकाङ्क्षस्यापि न्यूनपदे । अनुपात्तार्थकाकाङ्क्षाविषयार्थकत्वं[5] साकाङ्क्षत्वम् । यथा—

अर्थित्वे प्रकटी[6]कृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिविरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यति[7] ॥१३८॥

अत्र स्त्रीरत्नमित्युपेक्षितुमित्याकाङ्क्षति । अन्यथा स्त्रीरत्नमिति कथं मृष्यतीत्यनेनानन्वितं स्यात् । तथाहि—कथं मृष्यतीत्यस्य कथं न द्वेष्टीत्यर्थः स्यात् । मृषधातोरद्वेषार्थत्वात् । तथा[8] च स्त्रीरत्नस्य द्वेषायोग्यत्वे कथं कथमित्यादिनान्वयः । ततश्च साकाङ्क्षस्य न्यूनपद एवान्तर्भावः समुचितः ॥ तथा अपदप्र[9]युक्तस्यानुचितार्थे । यथा—

---

१ D om. one **मान**. २ B (after corr.) C **तन्त्रमपि**. ३ B (after corr.) **स्मितम्** for **श्रियम्**. ४ D **कल्लोलकोल्लित°** for **कल्लोलवेल्लित°**. ५ D **°विषयार्थत्वं** for **विषयार्थकत्वं**. ६ D **प्रकृतीकृते** for **प्रकटीकृते**. ७ D **मृष्यति** for **मृष्यति**. ८ D reads **तथा** twice. ९ CD om. **प्र** in **°प्रयुक्तस्य**.

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति[1] दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥१३९॥

अत्र 'स्याच्चेदेष न रावणः' इत्येतावतैव समाप्यम्। तथाहि—अत्र रावणं प्रत्युपेक्षा वाक्यार्थः स्याच्चेदेष न रावणः इत्यन्तेनैव प्राप्तः, क्व नु पुनरित्यादिना समर्थनं नार्हतीत्यनुचितार्थम्[2] ॥ एवमेकसमभिव्याहारनिर्दिष्टोत्तमाधमरूपस्य[3] सहचरभिन्नस्यानुचितार्थ एवान्तर्भावः[4]।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालंक्रियते नरेन्द्रता ॥१४०॥

अत्र श्रुत[5]बुद्ध्यादिभिरुत्कृष्टैः[6] सहचरैर्व्यसनमूर्खतयोर्भिन्नत्वमितीदमप्यनुचितार्थम् ॥ तथा प्रकाशितविरुद्धस्यानुचितार्थ एवान्तर्भावः। यथा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥१४१॥

अत्र 'विदितं तेऽस्तु' इत्यनेन वेदयितव्यानुचितार्थाभिधानेन क्रोधाभिव्यक्तेः श्रीस्तस्मादपसरति इति विरुद्धं प्रकाश्यते इतीदमप्यनुचितार्थम् ॥ तथा विध्ययुक्तस्य विधेयाविमर्षेऽन्तर्भावः। यथा—

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।

---

१. D दिव्येति लङ्कापुरी for लङ्केति दिव्या पुरी. २ C अनुचितार्थः for ०र्थम्. ३. A ०निर्दिष्टोत्तमरूपस्य for ०त्तमाधमरूपस्य. ४. Aftes ०भावः CD add यथा. ५. CD श्रुति० for श्रुत०. ६. D उत्कृष्टसहचरैः for उत्कृष्टैः सह०.

तेऽपि क्रूरचमूरुचर्म[1]वसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो[2] गुणानीहते ॥१४२॥

अत्र जगन्ति निःशेषयितुं वाताहारत्वमाचरितमित्याद्यर्थे दम्भ[3]स्फुरितमित्याद्यर्थान्तरन्यासस्वरसेन विवक्षणीये विधेयस्य[4] व्युत्क्रमाभिधानेन विधेयायुक्तत्वम्। तथा च स्फुट एव विधेयाविमर्शेऽन्तर्भावः ॥ तथा विधेयविरोध्यनुवादकरूपस्यानुवादायुक्तस्याप्यनुचितार्थ एवान्तर्भावः। यथा—

अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥१४३॥

अत्र विरहिणः पुरूरवसो मोहश्लथने विधेये विरहिप्राणदमनत्वेनानुवादो नोचित इतीदमप्यनुचितार्थम् ॥ तथा त्यक्तपुनःस्वीकृतस्य समाप्तपुनरात्ते। त्यक्तः उपसंहृतैकदेशः[5] स्वीकृतः[6] पुनःप्रकाशितैकदेशः। यथा[7] 'लग्नं रागावृताङ्ग्या' इत्यत्र 'विदितं तेऽस्तु' इत्यनेन यावतोऽर्थान्निवेद्याननिवेद्यैव मध्ये उपसंहाराभिधानात्। तथा चात्र समाप्तपुनरात्ते च आवृत्तिकल्पनमुत्थाप्याकाङ्क्षत्वमेव[8] दूषकताबीजमित्येतयोरभेदो न्याय्यः ॥ तथा अश्लीलस्यानुचितार्थे। यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥१४४॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिरितीदमप्यनुचितार्थम् ॥ नन्वेवमधिकपदादीनामपि निरर्थकादिष्वन्तर्भावः स्यादिति चेद् भवतु, का नो हानिरिति ॥

अथेदानीमेते दोषाः क्वचिददोषा इत्याह—

**कर्णावतंसादिपदे [9]कर्णादिध्वनिनिर्मितिः।**
**संनिधानादिबोधार्थम्**

यथा—

---

१. D ०चमूरवर्म० for ०चमूरुचर्म०. २. D जाड्यो for जाल्मो. ३. D दम्भस्य for दम्भ० ४. A om. from विधेयस्य upto रूपस्य. ५. After ०देशः BC add पुनः ६. D om. स्वीकृतः पुनःप्रकाशितैकदेशः ७. D तथा for यथा. ८. D वा for एव. ९. D om. from कर्णादिध्वनि० upto अत्रावतंसपदेन.

तस्याः कर्णावतंसेन जितं सर्वविभूषणम्[1] ॥१४५॥

अत्रावतंसपदेन कर्णाभरणमुच्यते। तथापि कर्णपदं नाधिकम्। तथाहि—कर्णपदेन कर्णस्थित्यवस्था प्रतिपाद्यते[2], तेन वर्णनीयोत्कर्षः प्रतीयते। स्वतो न भूषणान्तरजेतृत्वमपि तु तत्कर्णसंबन्धेनेति पर्यवसानात्। तथा[3] श्रवणकुण्डल-शिरःशेखर-धनुर्ज्या-मुक्ताहार-पुष्पमालाशब्देषु श्रवणादिशब्दास्तत्तद्विशेषलाभाय बोध्याः ॥

**स्थितेष्वेतत्समर्थनम् ॥४३॥**

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।

**ख्यातेऽर्थे निर्हेतोरदुष्टता**

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥१४६॥

अत्र रात्रौ पद्मस्य संकोचो, दिवा चन्द्रस्य निष्प्रभत्वं लोकप्रसिद्धमिति न भुङ्क्ते इति हेतुं नापेक्षते।

**अनुकरणे तु सर्वेषाम्।**

सर्वेषां[4] श्रुतिकटुप्रभृतीनां दोषाणाम्। यथा—

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गवीत्याह सुत्रामाणं यजेति च ॥१४७॥

**वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥४४॥**

वैयाकरणे वक्तरि, प्रतिपाद्ये च रसे रौद्रादौ कष्टत्वं गुणः। क्रमेणोदाहरणानि—

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः[5] कश्चिद्यत्र संनिहिते न ते ॥१४८॥

---

१ B पर्वं विभूषणम् for सर्वविभ°. २ AB प्रतिपद्यते for प्रतिपाद्यते. ३ After तथा D adds च. ४ D om. सर्वेषां. ५ CD °समः for °निभः.

अत्र वैयाकरणो वक्ता, अतोऽतिशयेन वैयाकरणत्वप्रतीतेर्गुणत्वम् ।

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च संमदम्[1] ॥१४९॥

अत्र वैयाकरणे प्रतिपाद्ये कष्टत्वं गुणः, तेन तस्य प्रतीत्यतिशयात् । रौद्राद्यौचित्यवशाद्यथा प्रागुदाहृते 'मूर्ध्नामुद्वृत्तकृत्ता' [८६] इत्यादौ । 'उत्कृत्योत्कृत्य' [२८] इत्यादौ चोत्कटा वर्णा ओजो व्यञ्जयन्तः प्रकृतवीरबीभत्सयोरानुगुण्यमादधते ॥

वाच्यौचित्यवशाद्यथा–

गर्जद्घनघटाटोपे हरौ हुंकारकारिणि ।
किमन्येऽपि[2] च दुर्दान्ताः सीदन्ति सुरदान्तिनः ॥१५०॥

अत्र सिंहे वाच्ये परुषा वर्णा गुणः[3] ॥

प्रकरणवशाद्यथा—

रक्ताशोक कृशोदरी क नु गत त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैवं चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥१५१॥

अत्र शिरोधूननेन कुपितस्य वचसि विप्रलम्भेऽपि गुणः ॥ क्वचिन्नीरसे कष्टत्वं न गुणो न दोषः । शृङ्गारवीरादिरसानामेकस्याप्यभावान्नापकर्षकमुत्कर्षकं च । यथा–

तद्गच्छ सिद्ध्यै कुरु देवकार्य-
मर्थोऽयमर्थोत्तरलक्ष्य[4] एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै
बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१५२॥

अप्रयुक्तनिहतार्थौ श्लेषादौ न दुष्टौ श्लेषरूपालंकारकृतचारुत्वनिर्वाहकत्वात् । प्रतीतिमान्थर्यस्यादोषत्वात्[5] ।

---

१ C संपदम for संमदम. २ D यत्र for ऽपि च. ३ A गुणाः for गुणः. ४ A अर्थान्तरभाव्यः; D अर्थोत्तरलभ्यः for अर्थोत्तरलक्ष्यः. ५ After °दोषत्वात् CD add यथा.

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गं च योऽधारयत्।
यस्याहुः[1] शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥१५३॥

अत्र माधवपक्षे शशिमदन्धकक्षयकरशब्दावप्रयुक्तनिहतार्थौ ॥

अश्लीलं क्वचिद् गुणः। यथा सुरतारम्भगोष्ठ्याम्। 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ।

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥१५४॥

शमकथासु[2] यथा—

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥१५५॥

अत्र वैराग्यहेतुघृणोत्पादनया जुगुप्सया[3] गुणः ॥

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥१५६॥

अत्र दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वम् ॥

संदिग्धमपि क्वचिद् गुणः। यथा—

कुभोजनं महाराज तवापि च ममापि च ॥१५७॥

इत्यादौ। अत्र राज्ञो महिमा वर्णनीय इति नियतार्थप्रतिपत्तिकत्वेन व्याजस्तुतिपर्यवसायित्वात् ॥ एवं सामाजिकस्य ज्ञत्वे सति अप्रतीतं न दोषः। तथा

१ D तस्याहुः for यस्याहुः. २ A शमकथा; C शमथासु for शमकथासु. ३ BC जुगुप्सा for °प्सासु.

इतराज्ञानस्वज्ञानात्कर्षद्वारा[1] गुणश्च । अधमप्रकृतेर्विदूषकादेरुक्तिषु हास्यकरीषु ग्राम्योक्तिगुणः । एतद् द्वय स्वयमुदाहार्यम्॥

न्यूनपदं क्वचिद् गुणः[2] ।

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्राश्लेष[3]रसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥१५८॥

अत्र पीडयेति पदं[4] वक्त्र्या हर्षमोहातिशयं प्रतिपादयद् गुणतामापद्यते । अध्याहारेण बोध[5]विलम्बनेऽपि[6] प्रकृतरसपोषकत्वात् । उक्तरूपा मम मनसि सुप्ता किं निश्चलत्वेन वर्तमानत्वात् । सुप्तस्य श्वासादिकमनुभूयत इत्यत आह—मृता नु किमिति । मृतापि बहिरनुभूयते इत्यत आह—लीनेति । जतुकाष्ठवदिति[7] शेषः । तथाभूतस्यापि केनचित्प्रकारेण विघटनं कर्तुं शक्यते इत्यत आह—विलीना नु किमिति । नीरक्षीरवदिति शेषः ॥ क्वचिन्न दोषो न गुणः । यथा[8]—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति' ॥१५९॥

इत्यादौ पिहितेत्यनन्तरं यत[9] इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः, उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः ॥ अधिकं[10] पदं क्वचिद् गुणः । यथा–

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे ॥१६०॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि हर्षादिपोषकत्वात् ॥

क्वचित्कथितपदं गुणः । लाटानुप्रासे अर्थान्तरसंक्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥१६१॥

---

१ D om. द्वारा. २ After गुणः CD add यथा. ३ A सान्द्रस्नेह° for सान्द्राश्लेष°. ४ After पदं CD add अनुपात्तं. ५ CD वाक्यार्थबोध° for बोध°. ६ CD °विलम्बे for °विलम्बने. ७ A जतुकाष्ठन्यायेनेति for जतुकाष्ठवदिति. ८ C om. यथा. ९ D नैतद्यत for यत. १० C अधिकपदं for अधिकं पदं.

यस्य[1] मित्राणि मित्राणीत्यादौ ॥

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि संपदः ॥१६२॥

इति त्रिषु लाटानुप्रासादित्रयसंपादकत्वात् ॥

पतत्प्रकर्षं क्वचिद् गुणः । यथा—

प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः[2] क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥१६३॥

अत्र चतुर्थपादे गुरोः स्मरणेन क्रोधाभावान्मसृणवर्णत्वमेवोचितमिति तस्यादोषत्वम्, विनयप्रकाशकत्वाच्च गुणत्वम् ॥ समाप्तपुनरात्तं[3] क्वचिन्न गुणो न दोषः, यत्र न विशेषणदानार्थं पुनर्ग्रहणमपि तु वाक्यान्तरमेव क्रियते, यथात्रैव 'प्रागप्राप्त' इत्यादौ ॥ अत्रायमभिप्रायः—विशेषणस्य विशेष्यसाकाङ्क्षतया विशेष्यपदावृत्तिनैयत्येन[4] तद्विलम्बेन विलम्बः । वाक्यान्तरारम्भे पुनरङ्गाङ्गिभावेनाकाङ्क्षावैगुण्यविरहान्न दोषः ॥

अपदस्थसमासं क्वचिद् गुणः । यथोदाहृते 'रक्ताशोक' [१५१] इत्यादौ । नो दृष्टेति क्रोधोक्तौ दीर्घसमासाकरणात्स्थानौचित्यविवेचनाभावेन क्रोधे समासपदपुष्टिः । श्रृङ्गारे दीर्घसमासानौचित्यात्पादस्थानसमासतेति भास्करः । तथा च तस्य क्रोधपोषकत्वाद् गुणत्वमिति । एवमन्यतोऽपि लक्ष्याल्लक्ष्यम् ॥

अथ रसदोषानाह—

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥४५॥**

---

१ D मित्राणि तव for यस्य मित्राणि. २ BC °स्तम्भापाविद्धः for °स्तम्भाप°. ३ D समासपुनरात्तत्वं for समाप्तपुन°. ४ D °पदावृत्तिनैयत्येन for °पदावृत्तिनै°.

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥४६॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥४७॥

(१) व्यभिचार्यादीनां स्वशब्देनोपादाने भावध्वनित्वं चमत्कारित्वं रसत्वं च न स्यात्। व्यञ्जितानामेव व्यभिचार्यादीनां तत्तद्रूपत्वात्। अत एवोक्तं 'व्यभिचारी तथाञ्जितः' इति। तथा अभिव्यक्तश्चमत्कारकारी[1] शृङ्गारादिको रस इति। एवं 'व्यक्तः स तैर्विभावाद्यैः' इत्यादि च। एवं सत्येतेषां प्रधानकाव्यत्वं भवति। एतत्सर्वं व्यञ्जनावृत्तेर्माहात्म्यम्। तत्र प्रमाणं तु सहृदयहृदयमेव॥

व्यभिचारिणः स्वशब्देनोपादानं यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥१६४॥

अत्र व्रीडादीनाम्।

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे ॥१६५॥

इत्यादि युक्तम्। एवं कृते व्रीडादीनामनुभावव्यङ्ग्यत्वसिद्धेः॥

एवं[2] रसस्य रसशब्देन शृङ्गारादिशब्देन[3] वा वाच्यत्वम्। यथा—

तामनङ्गजयमङ्गलश्रियं
किंचिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे
कोऽप्यजायत रसो निरन्तरः ॥१६६॥

---

१ D चमत्कारी for चमत्कारकारी. २ After एवं A adds च. ३ A om. शृङ्गारादि-शब्देन.

एवं शृङ्गारादिशब्देन वाच्यत्वेऽपि बोध्यम्। एवं स्थायिनोऽपि। यथा–

संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
टणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥१६७॥

अत्र उत्साहस्य ॥

(२) कष्टकल्पनया विभावादेरभिव्यक्तौ स्फुटमेव दूषकताबीजम् ॥

(३) प्रतिकूलविभावादिग्रह इति। यथा— शृङ्गारादिकं[1] प्रति प्रतिकूलस्य शान्तस्य विभावादे[2]रुपादानं समूलमुन्मूलयति, तदेव दूषकताबीजम्। यथा—

त्यजत मानमलं बत विग्रहै–
न पुनरेति गतं चतुरं वयः।
परभृताभिरितीव निवेदिते
स्मरमते रमते[3] स्म वधूजनः ॥१६८॥

(४) दीप्तिः पुनः पुनः। विच्छिद्य[4]विच्छिद्य ग्रहणं वेद्यान्तरसंबन्धेन रसधाराविच्छेदो भवतीति तदेव दूषकताबीजम्। यथा कुमारसंभवे रतिविलापे[5] ॥

(५) अकाण्डे प्रथनम्। यथा वेणीसंवरणे बहूनां संक्षये वृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णने ॥

(६) अकाण्डे छेदो यथा। वीरचरिते रामजामदग्न्ययोर्धारावाहिनि वीररसे कङ्कणमोचनाय गच्छामीति रामस्योक्तौ ॥

(७) अङ्गस्यापि प्रधानस्यातिविस्तरेण वर्णम्। यथा हयग्रीववधे[6] हयग्रीवस्य ॥

(८) अङ्गिनोऽननुसंधानं यथा रत्नावल्यां बाभ्रव्यागमने सागरिकाया विस्मृतिः॥

(९) प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च। धीरोदात्तधीरोद्धतधीरललितधीरशान्ता उत्तमाधममध्यमाश्च। तेषां लोकशास्त्रनातिक्रमेण अन्यथा वर्णनं विपर्ययः॥

(१०) अनङ्गस्य रसा[7]नुपकारकस्य। यथा कर्पूरमञ्जर्यां नायिकया आत्मना च

---

१ AD शृङ्गारादिकप्रतिकूलस्य for शृङ्गारादिकं प्रति प्रति°. २ C om. °भावादेरुपादानं. ३ C om. रमते. ४ A om. from बिच्छद्य upto °बीजम्. ५ A om. रतिविलापे. ६ D हयग्रीवस्य वधे for हयग्रीववधे. ७ C om. रसा°.

वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञः प्रशंसनम् ॥ ईदृशा इति नायिकापाद-प्रहारादिना नायककोपवर्णनम् ॥ उक्तं हि—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्य[१]बन्धस्तु रसस्योपनिषत्परा ॥ इति ॥

इहेदानीं यथासंभवं क्वचिददोषा एत[२] इत्याह—

**न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।**

यथा—

प्रातः पुनः स्यादुदियाच्च भानुः
पश्येम कोदण्डसनाततज्यम् ।
इत्युत्सुकस्तत्र स रामभद्रो
निद्रादरिद्रो रजनीमनैषीत् ॥१६९॥

अत्रोत्सुकशब्द इव तदनुभावो झटिति न[३] तथा प्रतीतिकृदिति स्वशब्देनोपादानम् । यथा वा 'दूरादुत्सुकमागते विगलितम्' इत्यादौ । 'औत्सुक्येन कृतत्वरा सहभुवा'[४] इत्यादौ च तदनुभावस्य सहसा प्रसारणरूपस्य[५] स्वशब्दस्येव तस्य झटित्यप्रत्यायकत्वात् ॥

**संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥४८॥**

बाध्यत्वेनोक्तिर्न वरं न दोषो यावत्प्रकृतरसपरिपोषकृत् । यथा-'काकार्यम्'[६] [३९] इत्यादौ वितर्कमतिशङ्काधृतीनां शान्तसंचारिणां शृङ्गारपरिपन्थिनामपि बाध्यत्वेनोक्तेः । शत्रुविजयपूर्वकराज्यलाभवत्प्रकर्षविशेषाधायकत्वेन तत्परिपोषकता । तानुपमर्द्य चिन्तायामेव विश्रान्तेः । तेनात्र प्रतिकूलविभावादिग्रहो न दोषः । संचार्यादेरित्यादिपदग्रहणाद्विरुद्धस्य विभावादेरपि बाध्यत्वेनोक्तौ गुणावहत्वम् । यथा—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥१७०॥

---

१ D प्रसिद्ध्यौचित्य° for प्रसिद्धौचित्य°. २ D एव for एत. ३ CD नो for न. ४ D om. सहभुवा. ५ CD प्रसरणादिरूपस्य for प्रसारणरूपस्य, ६ BC read the stanza काकार्यं in full; D काकार्यं शशलक्ष्मणेत्यादौ,

अत्र शृङ्गारविभावस्य शान्तविभावस्य जीवितास्थैर्यरूपस्य च परस्परं विरुद्धत्वेऽपि शृङ्गारविभावस्य बाध्यत्वेनाभिधानान्न दोषत्वमपि तु गुणत्वं शान्तपरिपोषकत्वात्। सर्वा रामादयः सत्येव जीविते तदर्थमुपादेयाः। जीवितं चातिभङ्गुरमिति किंकृतमुपादेयत्वमेतेषामतो रम्यत्वेऽपि निःफला एवेति पर्यवसानात् ॥

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥४९॥**

वीरभयानकयोरेकाश्रयत्वेन विरोध[1] इति रसान्तरमन्तरा[2] कार्यम्। यथा नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतमहो वादित्रम्' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः ॥

**स्मर्यमाणो विरुद्धो यः साम्येनाथ विवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥५०॥**

यथा—'अयं स रसनोत्कर्षी' [६३] इत्यत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं पोषयति। साम्येनेति यथा—

सरागया स्रुतघनघर्मतोयया
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविघट्टितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे ॥१७१॥

इत्यत्र शृङ्गाररौद्रयोः साम्यविवक्षणाददोषत्वम्। अङ्गिन्यङ्गत्वमिति। यथा[3]—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स[4] दहतु दुरितं शांभवो वः शराग्निः ॥१७२॥

---

१ After विरोध इति, D adds : प्रतिपक्षगतत्वेन भयानको निबद्धव्यः। शान्तशृङ्गारयोर्नैरन्तर्येण विरोध इति. २ CD अन्तरे for अन्तरा. ३ D om. यथा. ४ D शमयतु for स दहतु.

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं तस्य तु शृङ्गारः, तथापि[१] न करुणे विश्रान्तिरिति तस्याङ्गतैव। तथा च प्राग्यथा कामुक आचरितवांस्तथाद्य शराग्निरिति शृङ्गारपरिपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते॥

इति काव्यपरीक्षायां दोषनिरूपणं[२] नाम

तृतीय उल्लासः॥

१ D तथा for तथापि. २ Colophon : A °निरूपणो for °निरूपण.

# ४

एवं दोषानुक्त्वा गुणालंकारयोर्विवेकमाह—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥५१॥

गुणानां वर्णगतत्वं निरस्यति—रसस्येति । तत्र दृष्टान्तमाह—आत्मन इवेति । यथा आत्मन एव शौर्यादयो गुणाः नाकारस्य, तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम् । समुचितैर्वर्णैर्व्यज्यन्त इति व्यञ्जकव्यङ्ग्यभावसंबन्धेन वर्णगतत्वेन व्यवह्रियते । उत्कर्षहेतव इति । उत्कर्षश्च रसाद्यवच्छिन्नस्य[१] चैतन्यस्य[२] आनन्दांशे आवरणस्य सम्यगुच्छेदः, चमत्कारविशेषो वा । अचलस्थितय इति नियतस्थितय इत्यर्थः । नैयत्यं च रसेन तदुपकारेण च । ते गुणा रसं विना नावतिष्ठन्ते, अवस्थिताश्चावश्यं रसमुपकुर्वन्तीत्यर्थः । एतद्धर्मद्वयव्यतिरेकोऽलंकार इति गुणालंकारयोर्विभाग[३] इत्येवं दर्शयन्नाह—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥५२॥

ये वाच्यवाचकलक्षणाङ्गातिशयमुखेन[४] तं मुख्यं रसं सन्तं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिण उपकारका हारादय इवालंकाराः । यत्र नास्ति रसस्तत्रोक्तिमात्रवैचित्र्यपर्यवसायिनः । क्वचित्सन्तमपि नोपकुर्वन्ति । यथा—

---

१ CD रस्याद्यवच्छिन्नस्य for रसाद्यव°. २ A om. चैतन्यस्य. ३ AB विवेकभाग for विभाग, ४ ABC °तिशयेन for °तिशयमुखेन.

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥१७३॥

इत्यादावनुप्रासेन शब्दानामलंकरणद्वारा रस उपक्रियते । तथा—

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥१७४॥

अत्र वाच्यमुखेन मालोपमया तीव्रविषादिधर्मं प्रत्याय्य विप्रलम्भ उत्कृष्यते[1]॥ उक्तिवैचित्र्यं शब्दानां सुश्रवत्वं बन्धकौशलमर्थानामीपन्मनोहारित्वं स्वयमेवोदाहर्तव्यम्[2] । सन्तमपीति । यथा—

चित्ते चिहुट्टदि ण खुट्टदि[3] सा गुणेसुं
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोल्लम्मि वट्टदि पअट्टदि कव्वबन्धे
झाणे ण तुट्टदि चिरं तरुणी तरट्टी ॥१७५॥

अत्र सा मम सर्वत्रानुषज्यते इत्यत्र तात्पर्यम् । अत एव तरट्टी प्रगल्भा जाता । इदं विरहिणो नायकस्य वचनम् । अत्र सन्तमपि रसं नोपकरोति, ओजोव्यञ्जकस्य परुषानुप्रासस्य विप्रलम्भाननुकूलत्वात् । प्राकृतस्योजोगुणप्रधानत्वात्, तदनुकूलत्वेनादोषत्वाच्च ॥ तथा—

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुनः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
वक्त्रे[5] केवलमर्गलेव निहिता जीवस्य निर्गच्छतः[6] ॥१७६॥

---

१ After उत्कृष्यते adds : उक्तिवैचित्र्यमात्रपर्यवसायिना इति. २ यथा—नीरसतर्वरिह विलसति पुरतः for स्वयमेवोदाहर्तव्यम्. ३ BC खट्टदि for खुट्टदि. ४ D प्रकृतस्य for प्राकृतस्य. D कण्ठे for वक्त्रे. ६ D निर्गच्छते for निर्गच्छतः.

अत्र विप्रलम्भे जीवितापगमस्यैव वर्णनीयत्वेन[1] तत्प्रतिबन्धवर्णने सन्तमपि विप्रलम्भमुपमा नोपकरोति। एष एव[2] गुणालंकारविवेकः॥

इदानीं गुणानां भेदानाह—

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ॥५३॥**
**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।**

शृङ्गारे अर्थात्संभोगे। द्रुतिर्गलितत्वम्। इह हि सामाजिकानां चित्तेषु नवरसजन्यास्तिस्रोऽवस्थाः, द्रुतिर्विस्तारो विकासश्च। तत्र शृङ्गारकरुणशान्तेभ्यो द्रुतिः। वीरबीभत्सरौद्रेभ्यो विस्तारः। हास्याद्भुतभयानकेभ्यो विकासः[3]। येन हास्ये वदनविकासः। अद्भुते नयनविकासः। भयानके द्रुतापसरणमिति।

**करुणे विप्रलम्भे तच्छान्ते चाति[4]शयान्वितम् ॥५४॥**

अत्यन्तद्रुतिहेतुत्वात्॥

**दीप्त्यात्मविस्तृते[5]र्हेतुरोजो वीररसस्थिति।**

चित्तस्य विस्ताररूपदीप्तिहेतुरोजः॥

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु ॥५५॥**

वीराद्बीभत्से ततोऽपि रौद्रे सातिशयमोजः॥ एवं हास्ये शृङ्गाराङ्गतया माधुर्यं प्रकृष्टम्। विकासधर्मतया ओजोऽपि प्रकृष्टम्। एवमद्भुतेऽप्योजः। माधुर्यमप्याह्लादकत्वरूपतया। भयानकेऽप्येवमेव माधुर्यं मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य [6]दीप्तरसतया ओजः प्रकृष्टं च॥

**शुष्केन्धनादिव[7]त्स्वच्छजलवत्सहसैव यत्[8]।**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ॥५६॥**

अन्यदिति व्याप्यमिह[9] चित्तम्। यदा वीररसादिषु चित्तं व्याप्नोति तदा शुष्केन्धनादि[10]वदिति। यदा शृङ्गारकरुणादिषु तदा स्वच्छजलवदिति। सर्वत्रेति

---

१ CD ०त्वे for त्वेन. २ D om. एव ३ CD विकाशः for विकासः. ४ D नाति० for चाति०. ५ D वीप्सात्मविस्मृतेः for दीप्त्यात्मविस्तृतेः, ६ C आदीप्त० for दीप्त०, ७ D ०न्धनाग्निवत् for ०न्धनादिवत्. ८ D यः for यत्. ९ D इदं for इह.

सर्वेषु रसेषु सर्वासु रचनासु। झटिति प्रतीयमानत्वं रसेषु। झटिति प्रत्यायकत्वं रचनादिषु।

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥५७॥**

गुणवृत्त्या उपचारेण व्यञ्जकत्वेन तद्वत्त्व[1]मुपचर्यत इत्यर्थः। दशेति परोक्ताः। तदुक्तम्—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः॥

तत्र श्लेषादीन् क्रमेणाह। बहूनां पदानामेकवद्भासनं श्लेषः। संधिसौष्ठवादेकस्थानीयवर्णविन्यासात्। तदुक्तम् 'श्लिष्टमस्पृष्ट[2]शैथिल्यम्' इति। यथा—

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ॥१७७॥

इत्यादौ॥

श्रुतिमात्रेण शब्दानां येनार्थ[3]प्रत्ययो भवेत्।
साधारणः समग्राणां स प्रसादो गुणः स्मृतः॥

समग्राणां घटनादीनाम्[4]। यथा—

असकलनयनावलोकितेन
स्फुटपरिहासमनोहरैर्वचोभिः।
कमलमुखि मुरारिरेवमेवं
कथय कियन्ति दिनानि वञ्चनीयः ॥१७८॥

समता मार्गाभेदः[5]। यया रीत्योपक्रमस्तया रीत्या समापनम्। यथा—

अनङ्गरङ्गप्रतिमं तदङ्गं
भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः[6]
स्वान्तानि शान्तापर[7]चिन्तनानि ॥१७९॥

---

१ D. तद्वृत्तित्वं for तद्वत्त्वं, २ AD अस्पष्ट० for अस्पृष्ट०. ३ D यत्रार्थं० for येनार्थ०. ४ D घटादीनाम् for घटनादीनाम्. ५ D मार्गभेदः for मार्गाभेदः. ६ BC यथेमाः for यथैताः. ७ D शान्तापरि० for शान्तापर०.

पृथक्पदत्वं माधुर्यं सुश्रवत्वं वा। यथा—

वैवस्वतो मनुर्नाम माननीयो[1] मनीषिणाम् ॥१८०॥

इत्यादि। सुकुमारता परुषेतरवर्णशालित्वम्। यथा 'अपसारय घनसारम्' [१७३] इत्यादौ। अर्थव्यक्तिर्झटित्यर्थसमर्पणम्। अत्र अर्थपदेन वाक्यार्थ उक्तः। तेन प्रसादाद्भेदः। यथा 'असकल०' [१७८] इत्यादि। यथा वा—

वैखानसैः परिवृतेषु वनेषु वास-
स्ताताज्ञया जननि तत्र तवानुरोधः।
प्राणाधिकस्य भरतस्य च राज्यलाभो
रामेण देवि किमतः परमर्जितव्यम् ॥१८१॥

उदारता विकटत्वरूपा[2]। विकटत्वं च पदानां विच्छेदान्नृत्यत्प्रायत्वम्। यथा[3]—

सुचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झटिति रणितमासीत्तत्र चित्रं कलं च ॥१८१अ॥

ओजो गाढबन्धत्वम्। यथा—मूर्ध्नामुद्वृत्तकृत्तेत्यादि [८६]। कान्तिरौज्ज्वल्यम्। हालिकादिसाधारणपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वम्। यथा—

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम् ॥१८२॥

आरोहावरोहक्रमरूपः समाधिः। आरोहो गाढता। अवरोहः शैथिल्यम्। तयोः क्रमः क्रमेण तन्निबन्धनम्। यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणशोचि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥१८३॥

अत्र संचूर्णितान्ते आरोहः। सुयोधनान्तेऽवरोहः। पुनस्तवान्ते पूर्वः। भीम इत्यन्तेऽपरः॥ न पुनर्दशेति। एते श्लेषादयो न गुणाः। गुणा हि रसधर्माः। एतेषां तु शब्दधर्मत्वात्कथं गुणत्वम्। वस्तुतस्तु गुणा रसधर्मा इत्यत्र प्रमाणाभावादेते शब्दगुणाः स्वीकार्या एव। रसोत्कर्षकत्वात्[4]। न च तथा सति गुणालंकारयोर्विभागोऽनुप-

---

१. D om, माननीयो मनीषिणाम्, २ D विकटत्वं for विकटत्वरूपा. ३ A om, from यथा upto °कृत्तेत्यादि. ४ C रसाकर्षकत्वात् for रसोत्कर्ष°.

पन्न इति वाच्यम्, काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलंकारा इति विभागोपपत्तेः[1]। तथा अर्थगुणा अपि स्वीकार्याः। तथाहि—क्रम[2]कौटिल्यानु[3]-ल्वणोपपत्तियोगरूपघटनात्मा[4]श्लेषः। अस्यार्थः—क्रमः क्रियापरंपरा, विदग्धचेष्टितं कौटिल्यम्, अस्पष्टत्वमनुल्बणत्वम्, उपपादकयुक्तिरुपपत्तिः, एषां योगः, स एव रूपं यस्या घटनायाः[5], स श्लेषः। यथा—

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥१८४॥

एवं प्रसादोऽर्थ[6]नैर्मल्यम्[7]। यथा 'काञ्चीपदं न तु काञ्चीगुणस्थानम्' इति। अत्र[8] गुणपदस्याधिक्यात्। अवैषम्यरूपा समता प्रक्रमाभेदः। यथा 'उदेति सविता' [१२३] इत्यादौ। माधुर्यमुक्तेर्वैचित्र्यम्, एकस्यैवार्थस्य भङ्ग्यन्तरेण कथनम्। तदेव नवीकृतत्वं गुणः। यथा—

यदि दहत्यनलोऽत्र किमद्भुतं
यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता ॥१८५॥

इत्यादौ स्वाभाविकत्वादिदं नाद्भुतम्। एवं किं तत इति सदैवेत्येतयोरपि[9]। अत्र स्वाभाविकत्वस्य[10] धर्मस्य[11] एकस्य भङ्ग्यन्तरेण कथनान्नवीकृतत्वम्[12]। सुकुमारता अपारुष्यम, अकाण्डे शोकादिदायिताभावः। यथा मृते यशःशेष[13] इति।

सा रसवत्ता विहिता न बका विलसन्ति चरति नो कङ्कः।
सरसीव कीर्तिशेषं गतवति भुवि[14] विक्रमादित्ये ॥१८६॥

---

१. After विभागोपपत्तेः D adds शोभा च चमत्कारविशेषः. २ BC (wrongly) क्रमकौकुल्य०. ३ D ०नुल्बणत्वोप० for ०नुल्बणोप०. ४ A घटना स for घटनात्मा. ५ AB रचनायाः for घटनायाः. ६ BC अर्थवैमल्यम् for अर्थनैर्मल्यम्. ७ After ०नैर्मल्यम् CD add यावदर्थपदता. ८ D अर्थगुणपदस्य for अत्र गुण०. ९ A इति for अपि. १० D स्वाभाविकस्य for स्वाभाविकत्वस्य. ११ D om. धर्मस्य. १२ After नवीकृतत्वम् D adds स एव गुणः. १३ After यशःशेष इति D adds: सदैवेत्येनयापि अत्र स्वाभाविकस्य एकभङ्ग्यन्तरेण कथनान्नवीकृतत्वं स एव गुणः सुकुमारता। अपारुष्य अकाण्डे शोकादिदायिताभावः यथा मृते यशःशेष इति. १४ A om. भुवि.

तथा वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः । वस्तुनः स्वभावस्य स्फुटत्वं वर्णनया व्यक्तीकरणं यत्र । रसाभिव्यक्तिकृतचारुत्वाय प्राधान्येन परं भवति स गुणः । यथोदाहृते 'पारावतः[1] परिभ्रम्य[2] [१८२] इत्यादौ । स्वभावोक्तिस्त्वलंकारकृतचारुत्वाय प्राधान्येन[3] परं भवतीति ततोऽस्य भेदः । उदारत्वं वाचि वैदग्ध्यम् । यथा—

कामं[4]कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्या ॥१८६अ॥

इत्यत्र ।

पदार्थे वाक्यरचनं[5] वाक्यार्थे तु[6] पदाभिधा ।
प्रौढिर्व्याससमासौ च ओजः

क्रमेणोदाहरणानि[7]—चन्द्र इत्येकपदार्थे अत्रिनयनसमुत्थितं[8] ज्योतिरिति । द्वितीयं यथा 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इति बहुपदार्थेष्वभिसारिकापदाभिधानम्[9] । तथा एकवाक्यार्थस्या[10]नेकवाक्येन प्रतिपादनं व्यासः । अनेकवाक्यार्थ[11]स्यैकवाक्येन प्रतिपादनं समासः । क्रमेणोदाहरणम्—'प्राप्ताः श्रियः सकलकामदुघास्ततः किम्' [१८३] इत्यादौ[12] । अत्र तत्त्वज्ञानादेत[13]त्सर्वमकिंचित्करमित्येकवाक्यार्थोऽनेकवाक्येन प्रपञ्चितः द्वितीयो यथा—

पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे ।
इतरेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिपु ॥१८७॥

अत्र एकवाक्ये बहुवाक्यार्थनिबन्धना[14]त्समासः[15] । अथ कान्तिर्दीप्तरसत्वरूपा[16] यत्र रसोद्दीपनहेतुकं चारुत्वं नालंकारादिसंभिन्नम् । यथा 'यः कौमारहरः' इत्यादौ । [17]तथार्थदृष्टिरूपः समाधिः । अर्थश्च[18] द्विविधः । अयोनिरन्यच्छायायोनिश्च । क्रमेणोदाहरणम्[19]—

सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ।१८८॥

इत्यत्र । एवं[20] नारङ्गकवर्णनमन्येन न कृतमित्ययोनिः ।

---

१. C परायतः for पारावतः. २. After परिभ्रम्य C adds: रिरंसुरङ्कुर्वाते प्रियाम्. ३. CD om. प्राधान्येन, ४. A यथा.; C काम for कामं°. ५. A वाक्यरचना for °रचनं. ६. A च for तु. ७. CD उदाहरणं for °हरणानि. ८. CD °समुत्थं for °समुत्थितं ६ CD °पदाभिधाने for °धानम्. १०. D एकवाक्यस्य for °वाक्यार्थस्य. ११. D अनेकवाक्यस्य for °वाक्यार्थस्य. १२. BC इत्यादि for इत्यादौ. १३. C अन्यत् fer एतत् . १४. CD °निबन्धात् for °निबन्धनात्. १५. After समासः D adds: साभिप्रायत्वमस्य च उद।°–महौजसो मानधना इत्यादि. १६. D कान्तिर्दीप्तरसरूपा for कान्तिर्दीप्तरसत्वरूपा. १७. A समाधिः सुसदृशता for तथार्थ... समाधिः. १८. A स for अर्थश्च. १९. A आद्यो यथा for क्रमेणोदाहरणम्. २०. D om. एवं.

द्वितीयो यथा—

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥१८८॥

अत्र नयनोत्पलयोः सादृश्यमन्येनापि वर्णितमित्यन्यच्छायायोनिः । इत्यास्वादोत्कर्षहेतूनां गुणानामपलापः कर्तुमयोग्यः पूज्यपादानामिति । अपि च । यदुक्तम्— 'केचिदन्तर्भवन्त्येषु' इति, तदचारु, शब्दार्थधर्माणां गुणानां रसधर्मेषु माधुर्यादिष्वन्तर्भावस्यान्याय्यत्वात् । यदपि च 'दोषत्यागात्परे श्रिताः' इति, अनेन गुणा दोषाभावा एवेत्युक्तम्, तदपि तुच्छम् । दोषा एव गुणाभावाः सन्तु इत्यस्यापि[1] सुवचत्वात् । तथापि[2] विनिगमनाविरहाद् द्वावपि पृथक् । यदप्युक्तम् 'अन्ये भजन्ति दोषत्वं कुत्रचित्' इति, तदपि कुत्रचिद्वक्त्राद्यौचित्यवशाद् द्वयोरप्यन्यथात्वमभ्युपेतमेव ॥

अथ रसधर्माणां माधुर्यौजःप्रसादानां गुणानां के व्यञ्जका इत्याह—

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥५८॥**

ट-ठ-ड-ढ-वर्जाः कादयो मान्ताः शिरसि निजवर्गान्त्य[4]युक्तास्तथा रणौ[5] ह्रस्वान्तरिताविति वर्णाः । अवृत्तिः समासाभावो अथवा[6] ईषदर्थे नञ्, अल्पसमासो वा[7], मध्यवृत्ति[8]र्मध्यमः समासो वेति समासः । तथा माधुर्यवती पदान्तरयोगे रचना माधुर्यस्य व्यञ्जिका इति शेषः । पदान्तरयोग इति । यथालंकुर्वित्यत्र पदयोः संधौ मधुरवर्णोत्पत्तिः । यथा 'अनङ्गरङ्ग' [१७९] इत्यादि ॥

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥५९॥**

वर्गप्रथम[9]तृतीयाभ्यां द्वितीयचतुर्थयोर्योगः । रेफेण अधः उपरि[10] उभयत्र वा यस्यकस्यचित् । तुल्ययोः तेन तस्यैव संबन्धः । टवर्गः अर्थाण्णकारवर्जः । शकार-

१. D इति वैपरीत्यस्यापि for इत्यस्यापि. २. CD तथा च for तथापि. ३. D गुणदोषौ for द्वावपि. ४. A निजवर्णान्त्य° for °वर्गान्त्य°. ५. D रेफणकारौ for रणौ. ६. AD om. अथवा...समासोवा. ७. C इत्यर्थः for वा. ८. CD om. मध्यवृत्तिः. ९. C °तृतीयप्रथमाभ्यां for °प्रथमतृतीयाभ्यां. १० C om. उपरि.

षकारौ। दीर्घसमासः। विकटा घटना ओजसः[1]। व्यञ्जिकेति शेषः। यथा 'मूर्ध्नामुद्वृत्त' [८६] इत्यादौ॥

प्रसादव्यञ्जकमाह—

**श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत्।**
**साधारणः समग्राणां स प्रसादो गुणः स्मृतः[2] ॥६०॥**

समग्राणां घटनादीनां श्रुत[3]मात्रवर्णादयोऽर्थप्रतीतिहेतवो भवन्तः प्रसादव्यञ्जका इति भावः। यथा 'शून्यं वासगृहम्' [१५] इत्यादौ। यद्यपि गुणपरतन्त्रा घटनादयस्तथापि

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित्[4]।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥६१॥**

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः। क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्याद्रचनादयः। उदाहरणं तु स्वयमूहनीयम्। एवं क्वचिद्वक्तृवाच्यानपेक्षया प्रबन्धोचिता एव ते। तथाहि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। एवमन्यदप्यौचित्यमनुसर्तव्यम्॥

इति काव्यपरीक्षायां गुणनिर्णयो नाम
चतुर्थ उल्लासः।

---

१. CD ओजोव्यञ्जका for ओजसः। व्यञ्जिकेति. २. D मतः for स्मृतः. ३. D श्रुति° for श्रुत°. ४. C om. one क्वचित्.

# ५

अथालंकारानाह—तत्र काव्यलक्षणे शब्दस्य प्रागुपादानात् प्राक शब्दालंकारानाह—

**यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते ।**

**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥६२॥**

तथा श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । उदाहरणे—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥१६०॥

काक्वा यथा—

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति[1] सखि सुरभिसमयेऽसौ ॥१६१॥

नायिकया नैष्यतीति निबद्धे[2] तत्सखी काक्वा अन्यथयति नैष्यति ? एष्यत्येवेत्यर्थः । अन्येनेति विवक्षणात् स्वोक्तेः स्वयमन्यथाकरणे अपह्नुतौ नातिव्याप्तिः । यथा—

काले पयोधराणा[3]मपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः[4] पन्था: ॥१६२॥

**वर्णसाम्यमनुप्रासः**

स्वरवैसादृश्येऽपि व्यञ्जनसादृश्य[5]मनुप्रासः ।

**छेकवृत्तिगतो द्विधा ।**

[6]छेको विदग्धः । 'गृहासक्ताः पक्षिमृगाश्छेकाः' इत्यमरः । तथा च छेक[7]वद्बल्लभत्वाच्छेकानुप्रास इत्युच्यत[8] इति केचित् । वृत्तिर्मधुररसादिव्यञ्जिका तत्तदानुपूर्वीरूपा[9]गतो ज्ञात आभ्यामुपाधिभ्यामिति शेषः । तत[10]श्छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्विधा[11] ज्ञेयः । किं तयोः स्वरूपमित्याह—

---

१. AD नेष्यति for नैष्यति. २. A D निषिद्धे for निबद्धे०. ३. ABC वारिधराणां for पयोधराणां. ४. D पिच्छलः for पिच्छिलः. ५. C व्यञ्जनसाम्यम् for °सादृश्यम. ६. A om. छेको विदग्धः. ७. D छेकवल्लभत्वात् for छेकवद्बल्ल°. ८. A om. उच्यते. ९. B om. °रूपा. १० A om. ततः. ११. C द्विविधो.

**सोऽनेकस्य सकृत्पूर्वः**

अनेकस्य अर्थाद्व्यञ्जनस्य सकृदेकवारं साम्यं छेकानुप्रासः । यथा—

ततोऽरुणपरि[1]स्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्[2] ॥१६३॥

**एकस्याप्यसकृत्परः ॥६३॥**

एकस्य अपिशब्दादनेकव्यञ्जनस्य[3] द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ॥ वृत्तिं विभजते । तत्र

माधुर्यव्यञ्जकैर्वर्णैर्वैदर्भी रीतिरिष्यते ।
ओजःप्रकाशकैर्गौडी पाञ्चाली तैस्तथापरैः ॥

सर्वत्र प्रागुदाहृतं 'अनङ्गरङ्गप्रतिमम्' [१७६] इत्यादि, 'मूर्ध्नामुद्वृत्तकृत्त'[८६] इत्यादि, 'अपसारय घनसारम्'[4] [१७३] । इत्यादि च ।

**शाब्दस्तु[5] लाटानुप्रासो भेदे[6] तात्पर्यमात्रतः ।**

शाब्दः[7] शब्दगतोऽनुप्रासः । शब्दश्च पदं प्रातिपदिकं च ।

**पदानां सः**

सः लाटानुप्रासः । प्रागुदाहृतैः[8] 'यस्य न सविधे दयिता' [१६१] इत्यादि ।

**पदस्यापि**

यथा—

वदनं[9] वरवर्णिन्यास्तस्याः[10] सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥१६४॥

**वृत्तावन्यत्र तत्र वा ।**

**नाम्नः स वृत्त्यवृत्त्योश्च**

एकस्मिन्समासे भिन्ने वा[11] समासे समासासमासयोर्वा । नाम्नः[12]नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम् । यथा—

---

१. A °परिष्यन्द° for °परिस्पन्द°, २. D °पाण्डता for °पाण्डुताम्, ३. C अनेकस्य for अनेकव्यञ्जनस्य. ४. A om. घनसारम्. ५. A शब्दस्तु for शाब्दस्तु. ६. A om. भेदे तात्पर्यमात्रतः. ७. A D शब्दः for शाब्दः. ८ AB उदाहृत for उदाहृतैः ९. D चन्दनं. १०. D सत्यं तस्याः for तस्याः सत्यं. ११. A असमासे for वा समासे. १२. ACD om. oue नाम्नः

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥१६५॥

**तदेवं पञ्चधा मतः ॥६४॥**

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।**
**यमकं**

अर्थभिन्नानामिति एकार्थकभिन्नानामित्यर्थः । तेन लाटानुप्रासे नातिप्रसङ्गः । [1]उभयोरेकस्य वा निरर्थकत्वे संग्रहः । यथा[2]'समरसमरसोऽयम्' इत्यादौ[3] सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

**पादतद्भागवृत्ति तद्यात्यनेकताम् ॥६५॥**

पादः पद्यचतुर्थांशः तद्भागः तदर्धतदर्धादिरूपः । क्रमेणोदाहरणानि—
यथा मत्पितुः—

अचल एष विभाति[4] निरन्तरं
मृदुलतामहतीरसभावनम् ।
वहति चात्र वने युवतीगणो
मृदुलतामहतीरसभावनम् ॥१६६॥

यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवेहितां शिवेहितां स्मरामितांस्मरामि ताम् ॥१६७॥

[5]रामोऽहं जनयत्येव रामोऽहमिति धीर्न चेत् ।
सरामोऽहमिति ज्ञातुं स रामः सज्जनान्तिकम् ॥१६८॥

तारतारतरैरेतैरुत्तरोत्तरतो रुतैः ।
रतार्ता तित्तिरी रौति तीरे तीरे तरौ तरौ ॥१६९॥

एवमर्धावृत्तिश्लोकावृत्त्यादिभेदा द्रष्टव्याः ॥

**वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसौ**

१ D om. from उभयो° upto संग्रहः. २. C om. यथा. ३. C इत्यादि for इत्यादौ. ४. AB बिभर्ति. ५. A BC om. the stanza रामोऽहं.

अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरो न[1] गण्यते इति च नये वाच्यभेदेन भिन्ना अपि यद्युगपदुच्चारणे न श्लिष्यन्ति भिन्नं[2] स्वरूपमपह्नवते स श्लेषः। यथा—

महत्यागदयायुक्तः सत्यभामा[3]समन्वितः।
भवान्वा भगवान्वापि गतो भेदः परस्परम् ॥२००॥

अयं सभङ्गश्लेषः॥ अभङ्गश्लेषो यथा—

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः[4]।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥२०१॥

अत्राभिधानियन्त्रणाभावाद् द्वावप्यर्थौ वाच्यौ। अयं शब्दश्लेषः। अत्र हि शब्दाः परिवृत्तिं[5] न सहन्ते। यत्र तु शब्दाः परिवृत्तिं सहन्ते सोऽर्थश्लेषः। यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥२०२॥

अत्र 'अल्पेनोद्रेकमायाति' इति पाठेऽपि भवति श्लेषोऽयमिति[6]। एवम्—

सकलकलं पुरमेतज्जातं संप्रति सितांशु[7]बिम्बमिव ॥२०३॥

इत्यादौ श्लेषप्रतिभोत्पत्तिहेतुरुपमा नतूपमाप्रतिभोत्पत्तिः श्लेषः। यतः श्लेषस्यव साम्यनिर्वाहकता नतु साम्यस्यैव श्लेषनिर्वाहकता। श्लेषबन्धतः[8] प्राक् साम्यस्यानुपस्थितेः। अत्र सकलकलधमशब्द[9] एव साधारणो धर्मः। अथवा। सकलकलत्वयोरेकशब्दबोध्यत्वेन साजात्यमित्यपि[10] बोध्यम्। एवम्—

अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ॥२०४॥

इत्यादौ श्लेषप्रतिभोत्पत्तिहेतुर्विरोधो न तु विरोधप्रतिभोत्पत्तिहेतुः श्लेषः। श्लेषे हि[11]अर्थद्वयस्यान्वयबोधविषयत्वम्। इह तु एकस्यव, अन्यस्य तु[12] उपस्थितिमात्रम्।

---

१. D om. न. २. C भिन्नस्वरूपं for भिन्नं स्व०. ३. C सत्यनामा० for सत्यभामा०. ४. C ०क्षणाक्षमः for ०क्षणक्षमः. ५. D परावृत्तिं for परिवृत्ति. ६. C श्लेषोऽयमित्यर्थश्लेषोऽयमिति for श्लेषोऽयमिति. ७. C सुधांशु० for सितांशु०. ८. A श्लेषसंबन्धतः for श्लेषबन्धतः ९. C om. ०धम०. १०. A C om. अपि. ११. D om. हि. १२. C om. तु.

तथा—'सद्वंशमुक्तामणिः', 'नान्यः कविरिव स्वल्पश्लोको देव महान्भवान्' 'अनुरागवती संध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथापि न समागमः'॥ इत्यादौ परं[1]परितरूपक[2] व्यतिरेकसमासोक्तिषु श्लेषस्य निर्वाहकत्वं[3] न तु श्लेषे विश्रान्तिरिति॥

अथ चित्रं प्रकीर्त्यते॥

अक्षरादिभिरष्टधा।

तच्चित्रं यत्र वर्णानां पद्माद्याकृतिहेतुता॥६७॥

संनिवेशविशेषेण यत्र न्यस्ता वर्णाः पद्माद्याकारतामुल्लासयन्ति तच्चित्रम्। यथा—

भासते प्रतिभासार रसाभाताहता विभा।
भावितात्मा शुभा वादे देवाभा वत ते सभा॥२०५॥

पद्मबन्धः[4]।

रसासार रसा सारसायताक्ष क्षयायसा।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर[5]॥२०६॥

सर्वतोभद्रम्[6]। एवमन्येऽपि खड्गबन्धादयोऽनुस्मर्तव्याः[7]।

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।
एकार्थतेव शब्दस्य

अर्थान्तरसंक्रमितवाच्येऽतिप्रसङ्गवारणाय विभिन्नाकारेति। विजातीयानुपूर्विकशब्दगेत्यर्थः[8]। तत्र च नानुपूर्वीभेदः। एकार्थत्वे[9]नेवापततो भासनं पुनरुक्तवदाभासः। पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानम्। स च शब्दस्य केवलशब्दनिष्ठः। यथा—

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः॥२०७॥

तथा शब्दार्थयोरयम्॥६८॥

---

१. C परंहित° for परंपरित°. २. D °रूप° for °रूपक°. ३. D om. from. °कत्वं upto °विशेषेण. ४ A पद्मम् for पद्मबन्धः. ५. D °तक्षरः for °तक्षर. ६. A सर्वतोभद्रम् for °भद्रः. ७. C अनुसर्तव्याः; D अनुस्मर्तव्यः for °स्मर्तव्याः. ८. A B विजातीयपूर्वीका; C विजातीयानुपूर्वीका for विजातीयानुपूर्विकशब्दगा. ९. A om. from एकार्थ upto स च.

यथा—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥२०८॥

अत्र एकस्मिन्पदे तनुकरिरक्तेत्यादिरूपेण[1] परिवर्तिते नालंकार इति[2] शब्दालंकारः। अपरस्मिश्च वपुःकुञ्जररुधिरादिरूपे परिवर्तितेऽपि न[3] स हीयते इत्यर्थनिष्ठ इत्युभयालंकारोऽयमिति शब्दार्थालंकारयोर्मध्ये कथितः ॥

अथार्थालंकारानाह—

**साधर्म्यमुपमा भेदे**

समानैर्बहुभिर्धर्मैः संबन्धः साधर्म्यम्, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमुपमेति निर्गलितार्थः[4]। भेदग्रहणमनन्वयव्यवच्छेदाय।

**पूर्णा लुप्ता च**

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा अनुपादाने लुप्ता।

**साग्रिमा।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥६९॥**

यथेववादिशब्दा यत्परास्तस्यैव श्रुत्यैवोपमानताप्रतीतिरिति यथेववादिशब्दसत्त्वे श्रौती। तथैव 'तत्र[5]तस्यैव' इत्यनेन इवार्थे विहितस्य च[6] वतेरुपादाने सदृशतुल्यादिशब्दयोगे

सरसिजमिदमाननं च तस्याः
सममिति चेतसि संमदं विधत्ते ॥२०९॥

इत्यादौ प्रकृताप्रकृतत्वपर्यालोचनया एव उपमेयोपमानताप्रतीतिरित्यार्थी[7]। तद्वत् 'तेन तुल्यम्' इत्यादिना विहितस्य वतेः स्थितौ आर्थी[8]। 'इवेन नित्यसमासो विभक्त्यलोपश्च' इत्यनेन नित्यसमासे इवशब्दयोगे समासगा। समासानुशासनप्रयोजनं तु[9]भ्रिरिव रराज इत्यादौ। क्रमेणोदाहरणम्—

१. C D °रूपे for °रूपेण. २. A B om. इति शब्दालंकारः. ३. C स न for न स. ४. C निर्गलितोर्थो for निर्गलितार्थः. ५. C तस्य तत्रेव; D तत्र तस्य for तत्र तस्येव. ६ B C om. च. ७ BC om. आर्थी. ८. D om. आर्थी. ९ A B om. तु.

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥२१८॥

तथा धर्मवाद्योर्लोपे क्विप्समासगा यथा–

सविता विधवति विधुरपि सवितरति तथा[1] दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥२१९॥

समासे यथा[2]—राजकुञ्जरः। तथा धर्मोपमानयोरनुपादानेऽपि[3] भवत्युपमा । यथा—

ढुंढिल्लन्तो मरीहसि कण्टअकलिआइँ केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥२२०॥

एवं क्यचि वाद्युपमेयलोपे यथा—

कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥२२१॥

अत्र आत्मा उपमेयः। एवं त्रयाणां वादिधर्मोपमानानां लोपे भवत्युपमा । यथा 'मृगनयना मानसं हरति' इत्यादौ सप्तम्युपमानेत्यादिना यदा समासलोपौ ॥

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साथ विषादेन पद्मिनीव हिमाम्भसा ॥२२२॥

इत्यादौ एकस्यैव बहूपमानोपादाने मालोपमा। तथा यथोत्तरमुपमेयस्योपमानत्वे रसनोपमा बोध्या। शृङ्खलान्यायेन पश्चाद्वलनं[4] यथा—

मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावयुता[5] ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥२२३॥

एवमन्यदपि बोध्यम् ॥

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।**

**अनन्वयः**

उपमानोपमेयत्वे इति उपमानत्वमुपमेयत्वं चेत्यर्थः। उपमेयोपमावारणाय एकवाक्यगे इति। उपमानान्तरसंबन्धोऽन्वयः, तदभावोऽनन्वयः। अतोऽत्र उपमानान्तरव्यवच्छेदेन चमत्कार इत्युपमातोऽस्य भेदः। यथा—

१. ABD तथैव for तथा. २. D एवं for यथा. ३. C D लोपेऽपि for अनुपादानेऽपि भवत्युपमा. ४. A B पश्चाद्वलनया for °वलनं. ५. D प्रभावचिता for °युता.

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥२२४॥

**विपर्यास उपमेयोपमा तयोः ॥७०॥**

तयोरुपमानोपमेययोः विपर्यासः परिवृत्तिः अर्थाद् वाक्यद्वये । उपमेयेनोपमा उपमेयोपमा । यथा—

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥२२५॥

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।**

समेनोपमानेन । समेनेत्यनन्तरमैकरूप्येणेति शेषः । तथा च समेनैकरूप्येण संभावनमुत्प्रेक्षेत्यर्थः । संभावना चोत्कटकोटिकः संदेहः[1], 'अयं चन्द्र एव भविष्यति' इत्याकारः । यथा—

[2]अजस्रमास्फालितवल्लकीगुण-
क्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया
विभान्तमच्छस्फटिकाक्षमालया ॥२२६॥

**ससंदेहस्तु[3] भेदोक्तौ तदनुक्तौ च संशयः ॥७१॥**

भेदो वैधर्म्यम् । प्रकृतस्य समेन यदित्यनुवर्तते । तुर्भिन्नक्रमे । यदिति लिङ्गव्यत्ययात् संशय इत्यनेनान्वेति । तथा च प्रकृतस्य समेन संशयस्तु यः (स) ससंदेहनामालंकारः इत्यर्थः । भेदोक्तौ यथा[4]—

[5]द्विधाकृतात्मा किमयं दिवाकरो
विधूमरोचिः किमयं हुताशनः ।
गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ॥२२७॥

[6]पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥२२८॥

---

१. B C संशयः for संदेहः. २. A reads only the first line of the stanza, and adds इति माघे, ३. D ससंदेहश्च for °स्तु. ४. D यदा for यथा. ५. A reads only the first line of the stanza, and adds इति माघे. ६. A om. this stanza.

तदनुक्तौ यथा—

अस्याः सर्गविधौ[1] प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥२२९॥

**तद्रूपकमभेदो[2]ऽयमुपमानोपमेययोः।**

अथवा-

**उपमैव तिरोभूतभेदा रूपकमिष्यते ॥७२॥** इति॥

यथा-

अथ[3] लक्ष्मणानुगतकान्तवपु-
र्जलधिं व्यतीत्य शशिदाशरथिः।
परिवारितः परित ऋक्षगणै-
स्तिमिरौघराक्षसबलं वि(बि)भिदे[4] ॥२३०॥

यथा वा-

हिन्दोलिकेयमिन्दोः कलिकानङ्गस्य कौसुमी जयति।
यामानीय मनोभूरान्दोलयति प्रवासिचेतांसि ॥२३१॥

'माला तु पूर्ववत्' पूर्ववन्मालोपमावत्। यदा एकस्मिन्बहव आरोपितास्तदा मालारूपकम्। यथा-

रूपामृतस्य वापी कापि[5] जयश्रीरनङ्गस्य।
विभ्रमरसैकसंपज्जयति जनानन्दकन्दली बाला॥॥२३२॥

**नियतारोपणोपायः स्यादारोपः परस्य यः।**
**तत्परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥७३॥**

यथा-

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥२३३॥

विद्वन्मानसमेव[6] मानसम्, कमलायाः संकोच एव कमलाना[7]मसंकोचः।

1. D सर्वविधौ for सर्ग°, 2. B C अभेदो य उप° for अभेदोऽयमुप°. 3. A reads only the first line fo the stanza, and adds इति माघे. 4. A विभेदे for बिभिदे 5. C om. कापि. 6. C D om. विद्वन्°. 7. D कमलायामसंकोचः for कमलानाम°.

दुर्गाणाममार्गाणामेव दुर्गाया मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यासप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमारोपणनिमित्तो हंसादेरारोपः। यद्यपि शब्दार्था[1]लंकारोऽयं तथापि प्रसिद्धिवशादत्रोक्तः॥

भेदभाजि यथा—

आलानं जयकरिणः प्रतापतपनस्य पूर्वाद्रिः।
सेतुर्विपत्तिजलधेर्धरणिभुजस्ते भुजो जयति॥२३४॥

अत्र जयादेर्भिन्न[2]शब्दवाच्यस्य करित्वाद्यारोपे भुजस्यालानताद्यारोपो युज्यते। मालापि पूर्ववद्बोध्या॥

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।**

निषिध्य उपमेयमसत्यं कृत्वा। यथा—

स्फुटनीलोत्पलपटलं सुधामयूखे सुधासरसि।
मन्यामहे नितम्बिनि नैष कलङ्कः परिस्फुरति॥२३५॥

यथा[3] वा—

[4]तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा तदा[5]।
तनोति भानोः परिवेषकैतवा[6]-
त्तदा विधिः कुण्डलनां विधोरपि॥२३६॥

एवमियं भङ्गयन्तरेऽप्यूह्या[7]।

**द्योतयित्वा कमप्यर्थं गोपनीयं कथंचन।**
**यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः॥७४॥**

यथा 'काले[8] पयोधराणाम्' [१९२] इत्यादि प्रागुक्तम्।

**श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत्॥७५॥**

अनेकार्थता शक्त्या निरूढलक्षणया च यत्र भवति स श्लेषः। यथा-

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।

---

१. D सर्वार्थालकारो for शब्दार्था°. २. C विभिन्न° for भिन्न०. ३. D om. यथा वा. ४. A resds only the first line of the stanaza. and adds इति नैषधे. ५. C यदा for तदा. ६. C ०कौतुकात् for ०कैतवात्. ७. D om. अपि. ८. A B C कालेऽस्मिञ्जलदानाम् for काले पयोधराणाम्

रचयतितरां स्वैराचारप्रवर्तनकर्तनं

बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥२३७॥

विभाकरः सूर्यः राज्याभिषेककाले पुरोहितादिभिस्तुल्यत्वेन[1] प्रतापरुद्रादिवत्संकेतितो नृपविशेषश्च । उदयं पूर्वाचलं संपदं च । दिशां मालिन्यमन्धकारसंबन्धः[2] दिश्यानां जनानां कुवेशत्वं च । एवमन्यान्यपि पदानि बोध्यानि ।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः**

प्रकृतार्थप्रतिपादकेन वाक्येन श्लिष्टानां प्रकृताप्रकृतसाधारणानां भेदकानां विशेषणानां माहात्म्यात्, न तु विशेष्यसामर्थ्यादपि यदप्रकृतस्यार्थ[3]स्योक्तिरभिधानं प्रतिपादनं व्यञ्जनम् । समासेन संक्षेपेण अर्थद्वय[4]कथनात्समासोक्तिः[5] । यथा—

लहिऊण तुज्झ[6] बाहुप्फंसं जीए स को वि उल्लासो ।

जअलच्छी तुह विरहेण हुज्जला दुब्बला णं सा ॥२३८॥

अत्र तत्तद्विशेषणसामर्थ्याज्जयलक्ष्मीव्यवहारे कान्ताव्यवहारस्य आरोप्यमाणस्य चमत्कारकारितेति । इयमन्यै रेकदेशविवर्तिरूपकमिति भण्यते ।

निदर्शना[7] ।

**अभवद्वस्तुसंबन्ध उपमापरिकल्पकः ।**

[8]निदर्शना[9] दृष्टान्तीकरणम् । वस्तुसंबन्धो द्विधा, वाक्यार्थपदार्थभेदात् । तत्राद्यो यथा—

क्व[10] सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।

तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥२३९॥

अत्राल्पविषयमन्मत्या रघूणां वंशवर्णनं न[11] स्यादित्येको वाक्यार्थः । परस्तु[12] उडुपेन सागरतरणम्[13] । न चोपमानोपमेयभावं विना तयोः परस्परसंबन्ध[14] संभवतीति उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवसानम् ।

---

१. C तत्तुल्य० for तुल्य०. २. B ०संबन्धात् for ० संबन्धः. ३. A B om ०र्थस्योक्ति० ४. C अर्थद्वयस्य कथ० for अर्थद्वयकथ०. ५. After ०कथनात् C adds सा. ६. B तुज for तुज्झ. ७. C om. निदर्शना. ८. A om, निद...णम्, ९, C निदर्शनेति for निदर्शना. १०. A gives only the first line of the stanza and adds इति रघुवंशे, ११, A om. न. १२. B D अपरस्तु for परस्तु. १३. A सरित्पतितरणम् for सागर०. १४. संबन्धवत् for संबन्धः.

द्वितीया[1] यथा—

अस्या मुखस्य लीलां वहति शरच्छर्वरीनाथः ॥२४०॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशोऽयमित्युपमायां पर्यवसानम् ॥ पूर्ववन्मालापि बोध्या । यथा—

दोर्भ्यां तितीर्षति तरङ्गवतीभुजंग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलंघयिषति ध्रुवमेष देव
यस्ते[2] गुणान्गदितुमुद्यममादधाति ॥२४१॥

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव हि[3] सापरा ॥७६॥**

क्रिययैव स्वस्वकारणयोः संबन्धो योऽवगम्यते, उपमापरिकल्पक इत्यनुवर्तते, सा अपरा निदर्शना । यथा—

उन्नतं पदमुपैति यो लघु-
र्हेलयैव स पतेदिति ब्रुवन्[4] ।
शैलशेखरगतो दृषत्कण-
श्चारुमारुतधुतः पतत्यधः ॥२४२॥

अत्र पततीति क्रियया पतेदिति क्रियया सह लाघवे सति उन्नतपदप्राप्तिरूपस्य कारणस्य संबन्धः ख्याप्यते । स चान्यस्यापि लघोरुन्नतपदप्राप्तिस्तद्वत्पतनायेत्युपमायां पर्यवस्यतीति निदर्शना । इयं संभवद्वस्तुसंबन्धमूलेति पूर्वतो भेदः ॥

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥७७॥**

अत्राप्राकरणिकस्यार्थस्याभिधानेन प्राकरणिकस्यार्थस्याक्षेपोऽप्रस्तुतप्रशंसा । अस्या बहुविषयत्वेऽपि तुल्ये प्रस्तुते तुल्यान्तरस्याभिधानेऽतीव चमत्कार इति तदेवोदाह्रियते । यथा[5]—

१, C द्वितीयो for द्वितीया. २. A BC यस्त for यस्ते. ३. D च for हि. ४. A B भ्रवम् for ब्रुवन्. ५. D om. यथा.

अतिविततगतमोऽन्धकूपगर्भा-
दिदमुदधारि करेण येन विश्वम्।
चरमगिरिगभीरगह्वरान्तः
पतति स एष[1] न कैश्चिदीक्ष्यतेऽपि ॥२४३॥

अत्राप्रस्तुतस्य तथाविधस्य रवेरभिधानेन कृतानेकोपकारस्य कस्यचिन्महापुरुषस्य दुर्दशायां केनापि किंचिन्नोपकृतमित्याक्षिप्यते। एवमन्यत्रापि बोध्यम्॥ यथा—

अविदग्धवणिग्वीथीधूलिधूसरितो मणिः।
केनापि पुण्यजनुषा विदुषा परिचेष्यते ॥२४४॥

अत्रेदृशस्य मणेरभिधानेन केनापि दुर्विदग्धेनावमानितो गुणवत्तरः केनापि विज्ञोत्तमेन सत्कर्तव्य इत्याक्षिप्यते॥

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।**
**प्रस्तुतस्य तदन्यत्वं यद्यर्थोक्तौ[2] च कल्पनम् ॥७८॥**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।**
**विज्ञेयातिशयोक्तिः सा**

प्रकृतं निगीर्य असाधारणधर्मेणानुक्त्वा। तेन रूपकाद् व्यवच्छेदः। अध्यवसानं तत्तादात्म्येनाध्यवसायः। यथा—

लतामूले लीनो हरिणपरिहीनो हिमकरः
स्रवन्मुक्ताकारा गलति जलधारा कुवलयात्।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥२४५॥

यच्च[3] तदन्यत्वेनाध्यवसीयते सापरा। यथा—

अन्यदेव हि लावण्यमन्यैवास्यास्तनुद्युतिः।
तन्मन्ये रचना नैषा सामान्यस्य प्रजापतेः ॥२४६॥

यद्यर्थेति। यदिशब्देन चेच्छब्देन वा यत्कल्पनमर्थादसंभविनोऽर्थस्य सा तृतीया। यथा—

१. C D एव for एष. २. D यदर्थोक्तौ for यद्यर्थोक्तौ. ३ After यच्च D adds तदेव.

उभौ[१] यदि व्योम्नि पृथक्प्रवाहा-
वाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥२४७॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वकालोक्तौ समकालोक्तौ च चतुर्थी । यथा-

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥२४८॥

समकालोक्तौ यथा—

सममेव[२] समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥२४९॥

**प्रतिवस्तूपमा तु सा ।**
**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥७९॥**

सामान्यस्य[३] साधारणधर्मस्य वाक्यद्वये उपमेयवाक्ये उपमानवाक्ये च । यथा-

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥२५०॥

अत्र कथमित्यनेन न खल्वित्यनेन वा[४] अनौचित्यं प्रत्याय्यते[५] इत्येकस्यैवानुचितत्वरूपसामान्यस्य शब्दभेदेन द्विरुपादानम् । 'यदि दहत्यनलो' वेत्यादिमालारूपाप्येषा बोध्या ॥

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥८०॥**

यथायोगमेतेषां साधारणधर्मादीनां प्रतिबिम्बनं तत्र यत्र वाक्यद्वये विशेष्यस्य विशेष्येण विशेषणानां च विशेषणैर्यथायोगमुपमेयोपमानभावः[६] प्रत्याय्यते । यथा 'दर्पान्धगन्धगजकुम्भ' इत्यादौ यथा कटाक्षकृपाणयोरुपमानोपमेयभावः तथा

१. A gives only the first line of the stanza and adds इति माघे. २. A gives only the first line of the stanza and adds इति रघुवंशे. ३. C reads abcd of कारिका 79 before सामान्यस्य and omits it in its proper place. ४. D च for वा. ५. A प्रताय्यते for प्रत्याय्यते. ६. C उपमानोपमेयभावः for उपमेयोपमानभावः.

शोचिः कषायकान्त्योरपि। दृष्टोऽन्तो[1] निश्चयो यत्र स दृष्टान्तः। गृहीतप्रामाण्यकः यत्र दृष्टान्तवाक्येन दार्ष्टान्तिकवाक्यार्थनिश्चयस्य प्रामाण्यग्रहो भवतीत्यर्थः। यथा–

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।
आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥२५१॥

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।**

वृत्तिरुपादानं धर्मस्य क्रियादिरूपस्य एकस्थस्य[2] समस्तवाक्योद्दीपनाद्दीपकम्। यथा—

किविणाण[3] धणं णाआण फणमणी केसराणि सीहाणं।
कुलबालिआण थणआ कत्तो छिप्पन्ति अमुआणं ॥२५२॥

अत्र स्पृश्यन्त इति क्रिया सकृदुपात्ता। एवं बह्वीषु क्रियासु एकस्य कारकस्योपादानं बोध्यम्॥

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ॥८१॥**

पूर्वेण पूर्वेण वस्तुना उत्तरोत्तरं चेदुपक्रियते[4] तन्मालादीपकम्। यथा—

[5]संग्रामाङ्गणमागतेन[6] भवता चापे समारोपिते
संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्[7] ॥२५३॥

अत्र निःसपत्नभूलोकत्रयव्यापिकीर्तिलाभान्नृपोत्कर्षः प्रतीयते। तत्र पूर्वे यथायोगमुत्तरत्रोपकारकाः[8]॥

**नियतानां[9] सकृद्धर्मः सा पुनस्तुल्ययोगिता।**

नियतानां प्राकरणिकानामेव अप्राकरणिकानां[10] वा। वृत्तिरित्यनुवर्तते। अर्थवशाद्विभक्तिपरिणामः। तथा च वर्त्यते उपादीयते स सकृद्धर्म इत्यर्थः॥ यथा—

---

१. D दृष्टान्तो for दृष्टोऽन्तो. २. D एकस्य for एकस्थस्य. ३. B किवणाण for किविणाण. ४. A उपाक्रियते for उप०. ५. A संग्रामाङ्गणेति for the stanza. ६. D ०ङ्गणसंगतेन for ०ङ्गणमाग० ७ After लोकत्रयम् A adds इति खण्डप्रशस्तो. ८. B C उपकाराः for ०कारकाः. ९ D repeats this line. १० B D ०णिकानामेव वा for ०णिकानां वा.

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥२५४॥

अत्र विरहानुभावत्वेन प्रकृतानां पाण्डुतादीनां सकृदुपात्तावेदनक्रियान्वयः । एवमप्रकृतानामपि ॥

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ॥८२॥

अन्यस्य उपमेयस्य । व्यतिरेक आधिक्यम् । यथा--

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥२५५॥

हरवन्न विषमदृष्टिर्हरिवन्नो विधुतविततवृषः ।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥२५६॥

इति मालापि बोध्या ॥

आक्षेप उपमानस्य प्रतीपमुपमेयता ।
तस्यैव यदि वा कल्प्या तिरस्कारविडम्बनम्[1] ॥

इति उभयरूपस्य प्रतीपस्यात्र व्यतिरेक एवान्तर्भावः । यथा--

लावण्यौकसि राजनि राजत्यस्मिन्किमिन्दुबिम्बेन ॥२५७॥

द्वितीयं यथा--

शृणु सखि बत वचनीयं तव वदनेनोपमीयते चन्द्रः ॥२५८॥

अत्रोपमेयस्य न्यूनतायामपि व्यतिरेकमिच्छन्ति । यथा--

हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूत्यपथः सितीकृतः ॥२५९॥

तथा--

मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ।

इत्यादिषु ॥

---

१. C तिरस्कारानेव घनं; D तिरस्कारनिबन्धनम् for तिरस्कारविडम्बनम्.

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥८३॥

वक्तुमिष्टस्य विवक्षितस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं च विशेषं वक्तुं निषेधो निषेध इव यः, स यथाक्रमं वक्ष्यमाणविषय उक्तविषय इति द्विविध आक्षेपः। यथा—

ए एहि किं पि कीए वि कएण णिक्किव भणामि अलमहवा।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सं ॥२६०॥

अलमिति न भणिष्यामीत्यर्थः। न भणिष्यामीति पौनरुक्त्यं खेदातिशयपोषकम्। अत्र वक्ष्यमाणायां मरणावस्थायां तस्या अशक्य[1] वक्तव्यत्वं अलमित्यादिना[2] निषेधो व्यञ्जयति। यथा—

ज्योत्स्ना चन्दनमाला हालाहलतां परिप्राप्ताः।
संप्रति सुदृशो हन्तानेन किमुक्तेन न ब्रूमः ॥२६१॥

अत्र न ब्रूम इति निषेधो विरहे शीतलानां दुःसहत्वमतिप्रसिद्धमिति व्यनक्ति॥

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना।

क्रिया कारकव्यापारः। वैयाकरणाः क्रियाया एव हेतुतां मन्यन्ते। तथा च हेतुरूपक्रियाप्रतिषेधेऽपि तत्फलप्रकाशनं विभावना। अप्रसिद्धं कारणमाक्षिपतीति न विरोधः। यथा—

कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्तते स्म नलिनीलहरीभिरलोलिता[3]प्यघूर्णत सा ॥२६२॥

विशेषोक्तिरखण्डेषु कारणेषु फलावचः ॥८४॥

अत्राप्यप्रसिद्धं कारणं सिध्यतीति न विरोधः। यथा—

निशात्यय[4]व्यञ्जिनि पङ्कजाना-
मामोदमेदस्विनि गन्धवाहे।
न मुञ्चतः कैतवबद्धनिद्रा-
वन्योन्यकण्ठग्रहणं युवानौ ॥२६३॥

---

१. A अवश्यवक्तव्यत्वं for अशक्य०. २ C om. from ०दिना upto अत्र (after st. 261).
३. B C अलोडिता for अलोलिता. ४ A निशात्ययं for निशात्यय०.

**यथासंख्यं क्रमेणैव[1] क्रमिकाणां समन्वयः ॥८५॥**

यथासंख्यं नामालंकारः । यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र[2]
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन्[3]
शौर्योष्मणा च विनयेन च लीलया च ॥२६४॥

**सामान्यं[4] वा विशेषो वा यदन्येन[5] समर्थ्यते ।**
**ज्ञेयः सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥८६॥**

अनुपपद्यमानतया संभाव्यमानस्यार्थस्योपपादनार्थं यदर्थान्तरस्य न्यसनमुपपादकत्वेनोपन्यासः सोऽर्थान्तरन्यासः[6] । तत्र[7] साधर्म्येण सामान्यं विशेषेण समर्थ्यते । यथा—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि पीतम् ॥२६५॥

साधर्म्येण विशेषः सामान्येन यथा–'सुसितवसनालंकारायां' [१२१] इत्यादि । वैधर्म्येणाद्यो यथा—

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः[8] ॥२६६॥

एव[9]मन्त्योऽप्युदाहार्यः ॥

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः । यथा—

अभिनवनलिनीकिसलयमृणालवलयादि[10] दवदहनराशिः ।
सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥२६७॥

---

१. A D क्रमेणैवं for क्रमेणैव. २. D om. ०त्रम०. ३. D मुष्णन् for पुष्णन्. ४. D सामान्यो for सामान्यं. ५. D तदन्येन for यदन्येन. ६. D यो for सो. ७. D अत्र for तत्र. ८. B C गौर्गडिः for गौर्गलिः. ९. A एवमन्येऽप्युदाहार्योः for एवमन्त्योऽप्युदाहार्यः. १०. B C वलयानि for वलयादि.

अस्य बहवो विषयाः स्वयं लक्ष्यतोऽनुसर्तव्याः। कार्यकारणभूतयोर्धर्मयोर्भिन्नदेशतया भासनरूपोऽसंगत्याख्योऽलंकारो विरोध एवान्तर्भूतः[१]। यथा[२]—

जस्सेव[३] वणो तस्सेव[४] वेअणा भणइ तं जणो अलिअं।
दन्तक्खदं[५] कवाले वहूएँ[६] विअणा सवत्तीणं ॥२६८॥

तथा सत्यपि[७] कार्यस्य[८] कारणरूपानुकारे यत्तयोर्गुणौ क्रिये वा[९] मिथो विरुद्धतां व्रजतः स विषमालंकारोऽप्य[१०]त्रैवान्तर्भूतः। यथा—

सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोकाभरणं प्रसूते ॥२६९॥

तथा-

यद्यथा साधितं केनाप्यपरेण तदन्यथा।
तथैव[११] यद्विधीयेत स व्याघात इति स्मृतः॥ (का. प्र.)

इत्यनेन लक्षितस्य व्याघातस्य विरोध एवान्तर्भावः। यथा-

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥२७०॥

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥८७॥**

स्वयोस्तदेकाश्रययो रूपं वर्णः संस्थानं च। यथा-

अम्बाकरावलम्बादविलम्बादुत्थितः स्खलच्चरणम्।
क्वणितमणिमञ्जुरसनं मुकुलितदशनं हरिं वन्दे ॥२७१॥

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।**

व्याजेन स्तुतिर्व्याजरूपा स्तुतिर्वा। मुखे प्रथमतः, रूढिः पर्यवसानम्। यथा-

दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति।
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ॥२७२॥

**सा[१२] सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्॥८८॥**

---

१, D अन्तर्भावः for अन्तर्भूतः. २. C om. यथा. ३. B C जस्सेअ for जस्सेव. ४. B C तस्सेअ for तस्सेव. ५ BC दंतक्खतं for ०क्खदं. ६. B C वहुए for वहूएँ. ७. C om. from सत्यपि upto यथा. ८. D om. कार्यस्य. ९. BD च for वा. १०. D ०प्यत्रैव विरोधे for ०प्यत्रैव. ११ D तदेव for तथैव. १२. A साहसोक्तिः for सा सहोक्तिः.

सहार्थस्येत्यनेन समं सार्धमित्यादेरपि परिग्रहः[1]। एकमिति एकप्रतियोगिकान्वयबोधकमपीत्यर्थः। द्विवाचकं द्विप्रतियोगिकान्वयबोधजनकम्। अयं भावः—विशेषणपदानां विशेष्यान्वितस्वार्थबोधकत्वस्यौत्सर्गिकत्वम्। प्रकृते च सहाद्यव्ययपदसमभिव्याहारे विशेषसहकारेणापरार्थप्रतियोगिकान्वयप्रतिपादनमित्युभयप्रतिपादक[2]स्वार्थान्वय[3]बोधकमिति यत्रैकस्य प्राधान्येनान्यस्य गुणत्वेनैकधर्मान्वयित्वं तत्रायमलंकार इति पर्यवसितोऽर्थः। तेन 'चैत्रमैत्रौ सह पचतः' इत्यत्र नातिप्रसङ्गः। समुच्चये द्वयोः प्राधान्येनान्वयः, अत्र त्वेकस्य[4]। यथा—

साकं दिवसनिशाभिः श्वासा दीर्घा भवन्त्यद्य।
अपि तनुलतया सुतनोर्जीवाशा दुर्बला जाता ॥२७३॥

**विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः।**

क्वचिदशोभनः, क्वचिच्छोभनः। यथा—

विना रजन्या कश्चन्द्रो विना चन्द्रेण का निशा ॥२७४॥

द्वितीयो यथा—

विनानयेन राज्यश्रीः साध्वी योषिच्च चापलम् ॥२७५॥

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥८९॥**

परिवृत्तिरलंकारः। यथा—

लास्यं कमलवनानां दत्वादत्ते च सौरभं पवनः।
तान्यपि मुदं जनेभ्यो ददति ततो लब्धदर्शनान्युच्चैः ॥२७६॥

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।**
**तद्भाविकं**

उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥२७७॥

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥९०॥**

---

१. D ग्रहः for परिग्रहः २. D उभयप्रतियोगिकम् for ०प्रतिपादक०. ३. A om. from ०स्वार्था upto ०मलंकार. ४. A अत्रैकस्य for अत्र त्वेकस्य.

अनिर्भिन्नगभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥२७८॥

अत्र पूर्वार्धवाक्यार्थः पुटपाकप्रतीकाशत्वे हेतुः। पदार्थता यथा—

तं[१] सन्तः श्रोतुमर्हन्ति[२] सदसद्व्यक्तिहेतवः।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥२७९॥

अत्र सदसद्व्यक्तिहेतुत्वं[३] श्रवणार्हत्वे हेतुः।

**पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः।**

वाच्यतावच्छेदकं विना प्रकारान्तरेण वाच्यार्थस्य व्यञ्जनया यत्प्रतिपादनं तत्पर्यायेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तम्। यथा—

यं प्रेक्ष्य चिररूढापि निवास[४]प्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः ॥२८०॥

अत्रैरावणशक्रौ मदमानविमुक्तौ जाताविति व्यङ्ग्यमपि शब्देन प्रकारान्तरेणोच्यते। तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु[५] व्यङ्ग्यं तथा नोच्यते ॥

**उदात्तं वस्तुनः संपत्**

संपत् समृद्धियोगः। यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालांघ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥२८१॥

**महतां चोपलक्षणम् ॥९१॥**

उपलक्षणमङ्गभावः। अर्थादुपलक्षणीयेऽर्थे। यथा—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥२८२॥

न चात्र वीरो रसः। तस्येहाङ्गत्वात् ॥

---

१ A gives only the first line of the stanza, and adds इति रघुवंशे. २ D इच्छन्ति for अर्हन्ति. ३ D ०हेतुः for ०हेतुत्वं; after ०हेतुत्वं A adds तु. ४ D ०विनास० for निवास०. ५ A om. तु,

**तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्परं[1] भवेत् ।**

**समुच्चयोऽसौ**

यथा—

एष एव विषमो नवमेघः[2]
सोऽपि वर्षतितरामविरामम् ।
तत्र चेदविरतं लवशब्दाः
पूर्णमद्य सुतनोः शतमब्दाः ॥२८३॥

अत्र शतपूर्णे नवमेघ एव कारणम्, एतदुपरि वर्षणाद्युक्तम् । काव्यलिङ्गे हेतुहेतुमद्भावमात्रं विवक्षितम्, न पुनर्हेतु[3]गुणप्रधानभावचिन्ता । अत्र त्वेकस्यैव कार्य[4]कारित्वम्, अन्ये तत्सहायकं कुर्वन्तीति ततो भेद इत्यर्थः[5] । नाप्यसौ समाधिः तत्र कारणानां काकतालीयत्वयोगे तात्पर्यम्, अत्र तु न तथेति ततो भेदः ॥

**स त्वन्यो युगपद्या गुणक्रियाः ॥९२॥**

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । यथा[6]—

नयनं तव रक्तं च मलिनाश्चरणोऽरयः ।
धुनोषि चासिं सहसा तनुषे च महद्यशः ॥२८४॥

एवं गुणक्रिययोरपि बोध्यम् ॥

**एकं क्रमेणानेकस्मिन्पर्यायः**

एकं वस्तु क्रमेणानेकस्मिन्नभिधीयते यत्र स पर्यायः । यथा—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥२८५॥

**अन्यस्ततोऽन्यथा ।**

अनेकमेकस्मिन्नुच्यते यत्क्रमेण सोऽन्यः पर्यायः । यथा—

---

१ C तत्करं for तत्परं. २ AD न च मेघः for नवमेघः. ३ BC हेतूनां गुणप्रधानचिन्ता for हेतुगुणप्रधानभावचिन्ता. ४ C स्वस्कार्य०; D तत्कार्य० for कार्य०. ५ D om. इत्यर्थः. ६ D ततो for यथा.

मधुरिमरुचिरं वचः खलाना-
  ममृतमहो प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुमन्त-
  र्गतमिव हालहलं विषं तदेव ॥२८६॥

**अनुमानं यदुक्तं [1]यत्साध्यसाधनयोर्वचः ॥६३॥**

यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
  यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापसंधितशरप्रेङ्खत्करः क्रोधनो
  धावत्यग्रत एव शासनधरः सत्यं तदासां स्मरः ॥२८७॥

अत्र वस्तुगत्या व्याप्त्यसत्त्वेऽपि कविप्रौढोक्त्यैव तथा[2]भिधानमित्यलंकारत्वम्। अन्यथा वह्निमान्धूमादित्यत्रापि तथा स्यात्॥

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः।**

अर्थाद्विशेष्यस्य। यथा—

महौजसो[3] मानधना[4] धनार्चिता
  धनुर्भृतः संयति लब्धकीर्तयः।
नसंहतास्तस्य नभेदवृत्तयः
  प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥२८८॥

यद्यपि निरर्थकस्य दोषताभिधानात्तन्निराकरणेन सार्थकस्य स्वीकारः कृतस्तथाप्येकनिष्ठत्वेन[4] बहूनां विशेषणानामुपन्यासे वैचित्र्यमित्यलंकारमध्ये गणितः॥

**व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥६४॥**

निगूढमपि वस्तुनो रूपं प्रभिन्नं प्रकाशितं केनापि रूपेण[5] व्यपदेशेन यदपहूयते सा व्याजोक्तिः। न चैषापह्नुतिः, प्रकृताप्रकृतयोः साम्यस्येहासंभवात्। यथा—

---

१ D तव for यत्. २ B तथापिधानं for ०भिधानम्. ३ A gives only the first line and adds इति किराते. ४ D om. ०धना. ४ AB एकनिष्ठेन for ०निष्ठत्वेन. ५ D om. रूपेण.

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥२८९॥

**किंचित्पृष्टमपृष्टं च कथितं यत्प्रकल्प्यते ।**
**तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥९५॥**

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति सा परिसंख्या ।

अत्र कथनं प्रश्नपूर्वकं तदन्यथा च । यथा[1]—

किं ध्येयं विष्णुपदं किं वक्तव्यं[2] हरेर्नाम ।
किं कार्यमार्यचरितैरभिलषितं पूजनं विष्णोः ॥२९०॥

प्रश्नपूर्वकं यथा—

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनोर्वसति ॥२९१॥

**यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात्**

उत्तरमुत्तरं प्रति यथोत्तरम् । यथा—

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुराग[3]प्रभवा हि संपदः ॥२९२॥

**अथ हेतोरभेदतः ।**
**उक्तिर्हेतुमता हेतुः प्राचीनैरनुमोदितः ॥९६॥**

हेतुर्हेतुनामालंकारः । यथा—

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सुन्दरि लोकोत्कण्ठाभरः कालः ॥२९३॥

---

१ A om. यथा. २ A च स्तव्यं for वक्तव्यं. ३ BC गुणानुराग० for जनानुराग०.

**या वस्तुनो गुणैर्युक्तैर्मिथो भूषणभूष्यता ।**

**अन्योन्यमिति तज्ज्ञेयम्**

अन्योन्यमन्योन्यनामालंकारः । यथा—

कण्ठस्य[1] तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य[2] ।
अन्योन्यशोभा[3]जननाद्बभूव
साधारणो भूषणभूष्यभावः ॥२६४॥

**उत्तरश्रुतिमात्रतः ॥९७॥**

**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति[4] ।**

**असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ॥९८॥**

यथा—

गम्यतामन्यतः पान्थ तवेह वसतिः कुतः ।
दोषाय स्यादलं येन वसतिः प्रोषितालये ॥२६५॥

भो गृहिणि, वासं देहीति वसतियाचकस्य कस्यचिद्वचनममुना वाक्ये[5]नोन्नीयते । तत्र वा[6] सतीति प्रश्ने सतीत्यर्थः । असंभाव्यं लोकातिक्रान्तगोचरमुत्तरं[7] प्रतिवचनम् । यथा—

का विसमा देव्वगई किं दुल्लभं[8] जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुग्गेज्भं खलो लोओ ॥२६६॥

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाक्य एव विश्रान्तिरित्यनयोर्भेदः ॥

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।**

**कर्मणा[9] केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥९९॥**

कुतोऽपि आकारादिङ्गिताद्वा । यथा—

---

१ A gives only the first line and adds इति कुमारसंभवे. २ BC निस्तुलस्य for निस्तलस्य, ३ AC ०शोभाभरणाद् for ०शोभाजननाद्. ४ A चासति for वा सति. ५ A वाक्यस्य for वाक्येन. ६ A वसतीति for वा सति. ७ BC उत्तरप्रत्युत्तरं for उत्तरं प्रतिवचनम्; D om. उत्तरं. ८ A दुल्लहं for दुल्लभं. ९ C धर्मण; D धर्मे for कर्मणा.

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै[१]-
दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्तीव सख्याः
स्मित्वा पाणौ खड्गलेखां लिलेख ॥२९७॥

अत्राकृतिमालोक्य कयापि तर्कितं[२] पुरुषायितमसिलेखा[३]लेखनेन वैदग्ध्याद्भिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणितायोग्यत्वात् । इङ्गितोदाहरणं तु 'संकेतकालमनसम्'[४] [६] इत्यादि प्रागुक्तं बोध्यम् ॥

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ।**

परः पर्यन्तभावोऽवधिर्यस्य । धाराधिरोहिततया[५] तत्रैवोत्कर्षस्य विश्रान्तेः । यथा—

भोजनभूषणमबलाकरकमलावर्तितं दुग्धम्[६] ।
कदलं तदलंकारस्तदलंकारश्च शर्करासारः ॥२९८॥

**समाधिः सुकरं कार्यं कारणान्तरयोगतः ॥१००॥**

सुकरं सुकरत्वेन विवक्षित[७]मित्यर्थः । यथा—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥२९९॥

**समं समतया योगो यदि संभावितः क्वचित् ॥१०१॥**

अयमनयोर्योग उचित इत्यध्यवसानं चेत्तदा समनामालंकारः । इदं सद्योगेऽसद्योगे च । क्रमेणोदाहरणम्—

निशा[८] शशाङ्कं शिवया गिरीशं
श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकः प्रयासः
परस्परं योग्यसमागमाय ॥३००॥

सुमहद्विचित्रमेतत्समुचितरचने विधिश्चतुरः ।
आस्वाद्यं निम्बफलं तस्य यदास्वादकः काकः ॥३०१॥

---

१ C ०प्रवेद्यैः for प्रबन्धैः. २ D वितर्कितं for तर्कितं. ३ C असिलेख्यलिखनेन, D ०लेखालिखनेन for ०लेखालेखनेन. ४ D ०मनसाम् for ०मनसम्. ५ B ०रोहितया for रोहिततया. ६ D पयःसारम् for दुग्धम्. ७ D विवसितम् for विवक्षितम्. ८ A gives only the first line of the stanza and adds इति नैषधे,

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।**
**कर्तुः क्रियाफलं नैवानर्थः स विषमो द्विधा ॥१०२॥**

द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते, यश्च किंचिदारभमाणः कर्ता क्रियायाः प्रणाशान्न केवलमभीष्टं तत्फलं लभते, यावदप्रार्थितमनर्थमासादयति स द्विरूपो विषमः । क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेय[१]मायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥३०२॥

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥३०३॥

**महतो[२]र्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।**
**आश्रयाश्रयिणौ स्यातां तनू अप्यधिकं तु तत् ॥१०३॥**

आश्रिताश्रययोर्महतोरपि विषये[३] तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तु[४]प्रकर्षविवक्षया यथाक्रमं यदधिकतां व्रजतः, तदिदं द्विविधमधिकम् । क्रमेणोदाहरणम्—

अहो विशालं भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्तोऽपि यशोराशिर्यदत्र ते ॥३०४॥

युगान्तकाल[५]प्रतिसंहृतात्मनो
जगन्ति यस्यां [६]सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंभवा मुदः ॥३०५॥

**[७]प्रतिकर्तुमशक्तेन प्रतिपक्षं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥१०४॥**

प्रतिपक्षं तिरस्कर्तुमित्यर्थः । तत्स्तुत्यै [८]प्रतिपक्षस्तुत्यै । यथा—

---

१ D केयम् for क्वेयम्. २ A महतो for महतोर्. ३ D विशेषौ for विषये. ४ C ०प्रकर्षवस्तुविवक्षया for ०वस्तुप्रकर्ष. ५ A gives only the first line of the stanza and adds इति माघे. ६ D सविकासम् for सविकाशम्. ७ A interchanges प्रतिकर्तुं and प्रतिपक्षं. ८ om. प्रतिपक्षस्तुत्यै

त्वं विनिर्जितमनोभवरूपः
सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां
ताडयत्यनुशयादिव कामः ॥३०६॥

**विधीयते यद्बलवत्सजातीयोपलम्भनैः ।**
**तिरस्करणमन्यस्य तन्मीलितमिति स्मृतम् ॥१०५॥**

तथा च बलवत्सजातीयग्रहणकृताग्रहणमेवाभिभवस्तदेव मीलित[1]मिति मन्तव्यम् । यथा—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नाया[2]मभिसारिकाः ॥३०७॥

**स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्[3] ।**
**विशेषणतया वस्तु यत्र सैकावली द्विधा ॥१०६॥**

पूर्वं पूर्वं प्रति यत्रोत्तरोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन स्थापनं निषेधो वा सा द्विधैकावली[4] । क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि
वराङ्गना रूप[5]पुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलास-
मस्त्रं विलासाः कुसुमायुधस्य ॥३०८॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीन[6]षट्पदम् ।
न षट्पदोऽसौ न[7] जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥३०९॥

पूर्वत्र पुराणां वराङ्गनास्तासामङ्गविशेषणमुखेन रूपं तस्य विलासास्तेषामस्त्र-ममुना क्रमेण विशेषणं विधीयते । उत्तरत्र निषेधेऽप्येवमेव योज्यम् ॥

१ A om. मीलितम्, C ईक्षितं for मीलितम्. २ A निशायाम् for ज्योत्स्नायाम्. ३ C परः for परम्. ४ D द्विविधा for द्विधा. ५ CD ०परिष्कृताङ्ग्यः for पुरस्कृता०. ६ D अलीक० for अलीन०. ७ BC कलगुञ्जितो न यो for न जुगुञ्ज यः कलं.

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**

**स्मरणं**

यथा—

निम्ननाभिकुहरेषु यदम्भः
　　प्लावितं मृगदृशां लहरीभिः ।
तद्भवैः कुहकुहैः सुरनार्यः
　　स्मारिताः सुरतकण्ठरुतानाम् ॥३१०॥

**भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥१०७॥**

तदित्यन्यदित्यप्राकरणिकं[1] निर्दिश्यते । अन्यसंविदित्यन्य[2]स्यान्यतया संवेदनं व्यधिकरणप्रकारकं ज्ञानं भ्रान्तिमानित्यर्थः । तथा च अनुभूयमानारोपरूपस्य सामान्यालंकारस्याप्य[3]त्रैवान्तर्भावः । यथा—

वेत्रत्वचा तुल्यरुचां वधूनां
　　कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्य-
　　न्कोऽवेदयिष्यन्नवचम्पकानि ॥३११॥

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतीतमभेदं[4] न व्युदसितुमुत्सहते । साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनं विरोधीति न्यायात् । न चेदं रूपकं प्रथमातिशयोक्तिर्वा । तयोराहार्यारोपरूपत्वादस्य[5] त्वनाहार्यत्वात् । यथा—

धामधर्षितनवैन्दवं महः[6]
　　प्रेक्ष्य संभ्रमवशादसाध्वसः ।
वीतिहोत्र इति गेहिनीस्तना-
　　वाचकर्ष कलशीधियाध्वगः ॥३१२॥

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥१०८॥**
**अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥१०९॥**

एकात्मा एकस्वभावः । तथा [7]चैकमेव वस्तु एकेन स्वभावेन युगपदनेकत्र वर्तत इत्यर्थः । तथैवेति तेनैव प्रकारेणेत्यर्थः । क्रमेणोदाहरणम्—

---

१ A अप्रकारकं for अप्राकरणिक. २ A om. अन्यस्य. ३ A om. अपि. ४ AB अभेदेन for अभेदं न. ५ A अत्र for अस्य. ६ D धामधर्षि नवमैन्दवं महः for the first line. ७ A om. च.

दिवमप्युपयाताना[1]माकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥३१३॥

सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु ।
अम्हारिसाण सुन्दर ओआसो[2] णत्थि पावाणं ॥३१४॥

स्फुरदद्भुतरूपमुत्प्रताप-
ज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभू-
र्भुवि सत्यं सविता बृहस्पतिश्च[3] ॥३१५॥

**समुत्सृज्य[4] गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥**

समुत्सृज्येति । अत्र स्वगुणतिरस्कार एव स्वगुणत्यागः । यथा—

विभिन्नवर्णा[5] गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचं[6] रुचा स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥३१६॥

**तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ॥११०॥**

अस्याप्रकृतस्याननुहारः अग्रहणम् । यथा—

गाङ्गमम्बु सितमम्बु यामुनं
कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता
चीयते न च न चापचीयते ॥३१७॥

**सेष्टा संसृष्टिरेतेषां भेदेनैकत्र या स्थितिः ॥१११॥**

एतेषामलंकाराणा भेदेनान्योन्यनिरपेक्षतया शब्दभाग एव, अर्थभाग[7] एव, उभयत्र वा यद्व्यवस्थानं सा संसृष्टिः ॥ तत्र शब्दालंकारसंसृष्टिर्यथा 'तारतारतरैः'

१ D उपजातानाम् for उपयातानाम्. २ C आवास कस्स; D ओवास कत्थ for ओआसो णत्थि. ३ After बृहस्पतिश्च D adds एव हरणेऽपि यथा 'गृहिणी सचिवः सखी मिथः' इत्यादि. ४ D स्वमुत्सृज्य for समु०. ५ A gives only the first line of the stanza and adds इति माघे. ६ A रुचा रुचं for रुचं रुचा. ७ D om अर्थभाग एव. ८ A व्यवस्थापनं for व्यवस्थानं.

[१६६] इत्यादि ॥ अर्थालंकारसंसृष्टिर्यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥३१८॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः[१] । परत्र तु तथाविधे[२] उत्प्रेक्षोपमे ॥ शब्दार्थालंकारयोः संसृष्टिर्यथा 'हिन्दोलिकेयमिन्दोः कलिका' [२३१] इत्यादावनुप्रासो रूपकं च संसृष्टिं प्रयोजयतः ॥

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ।**

तेषामलंकाराणामात्मनि आत्ममात्रे अविश्रान्तिजुषां चमत्कारेऽन्यापेक्षाणामङ्गाङ्गित्वमनुग्राह्यानुग्राहकत्वं तद्रूपः संकरः इत्यर्थः । इतरविजातीयासहकारेण चमत्कारकारित्वं विश्रान्तिः । एतेन[३] संसृष्टे[४]र्भेदो दर्शितः । यथा–

शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥३१९॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः प्रभूतचमत्कारनिमित्तमित्येतयोरङ्गाङ्गिभावः । एवंरूपश्च संकरः शब्दालंकारयोरपि दृश्यते । उदाहरणं स्वयमूह्यम् ॥

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥११२॥**

एकस्य एकतरस्येत्यर्थः । न्यायदोषौ साधकबाधकप्रमाणे । तथा चैकत्र काव्ये द्वयोर्बहूनां वालंकाराणां सत्त्वप्रसङ्गे संभवत्यप्येकतरस्यापि परिग्रहे साधकबाधकप्रमाणाभावात् । संशयः संदेहसंकर इत्यर्थः । यथा–

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनापि निरुद्धाशमविकीर्ण[५]मिदं तमः ॥३२०॥

---

१ A कुरुतः for प्रयोजयतः. २ A तथाविधोत्प्रे० for तथाविधे उत्प्रे०. ३ D एतेषां for एतेन. ४ A विश्रान्तेः for संसृष्टे. ५ CD अविशीर्णम् for अविकीर्णम्.

अत्र किं कामस्योद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेण कथनात्पर्यायोक्तम्, उत तदाननस्येन्दुबिम्बतयाध्यवसानादतिशयोक्तिः, किमेतदिति वक्त्रं निर्दिश्य तद्रूपारोपणाद्रूपकमिद[1]मित्यादिबहूनां संशयादयमेव संकरः। यत्र पुनः 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव[2] हासद्युतिः' [३२१] इत्यादौ हासद्युतिर्वक्त्र एव संभवतीत्युपमायाः संभवो न रूपकस्य। तथा 'पादाम्बुजं जयत्यस्या मञ्जुमञ्जीरसिञ्जितम्' इत्यत्र मञ्जीरसिञ्जितमम्बुजे नास्तीति रूपकस्य बाध उपमायास्तु संभव इति न तत्र संदेहसंकरः। एवमन्यत्रापि भाव्यम्॥

**स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम्।**

**व्यवस्थितं च**

एकस्मिन्नेव पदे स्पष्टतया यदुभावपि शब्दार्थालंकारौ व्यवस्थां भजतः सोऽप्यपरः। यथा–

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब–
विस्तीर्णकर्णिकमथो दिवसारविन्दम्[3]।
श्लिष्टाष्टदिग्दलकलापमुखावतार–
बद्धान्धकारमधुपावलि संचुकोच ॥३२२॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ॥

**तेनासौ त्रिरूपः[4] परिकीर्तितः ॥११३॥**

तदयमनुग्राह्यानुग्राहकतया संदेहेन एकपदप्रतिपाद्यतया च व्यवस्थितत्वात् त्रिरूपतया संकरः कथितः॥ अत्रेदमवधातव्यम्—यत्र शब्दाः परिवृत्तिं न[5] सहन्ते स शब्दस्यालंकारः[6]। यत्र नो[7] तथा सोऽर्थालंकारः। यत्र तु केचन शब्दाः परिवृत्तिं सहन्ते केचिच्च न सहन्ते[8] स उभयालंकारः। यथा पुनरुक्तवदाभासः परंपरितरूपकं च[9]॥

---

१ A om. इदम्. २ A ज्योत्स्नेह for ज्योत्स्नेव. ३ C ०रविन्दः for रविन्दम्.
४ A त्रिविधः for त्रिरूपः. ५ A om. न. ६ A शब्दालंकारः for शब्दस्यालं० ७ D न for नो. ८ A om. सहन्ते. ९ D श्लिष्टपरंपरित० for परंपरित०.

अथैषामलंकाराणां दोषाः ॥ अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति त्रयो दोषाः । यथा—

अर्चनेन तव दिव्यवर्चसा
स्यन्दनेन पदमैन्द्रमृच्छति[2] ।
वन्दनेन तव शैलनन्दने
नन्दने च जन एष नन्दति ॥३२३॥

अत्र अर्चनादिना [4]ऐन्द्रपदलाभादिफलमनुप्रासानुरोधेनैव प्रतिपादितम्, न तु पुराणादिषु तथा प्रसिद्धिरिति प्रसिद्धिविरोधः ॥ तथा[6]—

उर्व्यसावत्र[7] तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु शक्यते गन्तुं शिरो नमय तन्मनाक् ॥३२४॥

अत्र अनुप्रासेन विविच्यमानं न किंचिदपि चारुत्वं[9] प्रतीयते इत्यनुप्रासस्य वैफल्यम्[10] ॥ तथा[11]—

[12]अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
[13]कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥३२५॥

इत्यादौ शृङ्गारे गौडी वृत्तिर्विरुद्धेति वृत्तिविरोधः ॥

एवं यमकस्य पादत्रयगतत्वेन यमनं दोषः । यथा—

[14]सदानवरिपुं शंभुं सदालापैर्विविक्तधीः ।
सदा [illegible]यन्कृनार्थः स्यान्मदाहंकारवर्जितः ॥३२६॥

उपमाया[15] उपमानस्य जातिपरिमाण[16]गतं न्यूनत्वमधिकत्वं च दोषः । तथा साधारणधर्माश्रितमधिकत्वं न्यूनत्वं[17] च दोषः । क्रमेणोदाहरणम्—

चण्डालैरिव[18] युष्माभिः साहसं परमं कृतम् ॥३२७॥

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥३२८॥

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥३२९॥

---

१ D क्रमेण यथा for यथा. २ A इच्छति for ऋच्छति. ३ A एव for एष. ४ D इन्द्रपदं for ऐन्द्र॰. ५ A om. ॰पदलाभादि॰. ६ D om. तथा. ७ D उर्व्यसा तत्र for ॰सावत्र. ८ C मर्वन्तं. ९ C om. चारुत्वं. १० A om. from वैफल्यं upto यमकस्य. ११ D om. तथा. १२ D om. आकण्ठं.. मुद्धर. १३ C om. this line. १४ A om. सदा. १५ A उपमायाम् for ॰माया. १६ A ॰प्रमाणं for ॰परिमाण॰. १७ D om. न्यूनत्वं. १८ D चाण्डालैः for चण्डालैः.

अत्रात्यन्तोत्कृष्टस्योपमानीकरणमपकृष्टस्योपमेयस्योपहास एव पर्यवस्यति इति[1] दोषताभिधानमधिकस्येति भावनीयम् ॥

पाताल[2] इव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपात्रसंनिभः ॥३३०॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यन्तं कदर्थित इति दुष्टत्वम् ॥

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
विरेजे नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥३३१॥

अत्र उपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति न्यूनत्वम् ॥

स पीतवासाः प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां
संसृज्यमानः शशिनेव मेघः ॥३३२॥

अत्र उपमेयस्य शंखादेरनिर्देशाच्छशिनो[3] ग्रहणमतिरिच्यत इति ॥ तथा उपमायामुपमानोपमेययोर्लिङ्गवचनभेदो दोषः, साधारणधर्मस्यैकमात्रगतत्वेन प्रतीतेः[4] ॥

चिन्तारत्नमिव च्युतोऽसि करतो[5] धिग्मन्दभाग्यस्य मे ॥३३३॥

यथा वा—

सक्तवो भक्षिता राजञ्शुद्धाः कुलवधूरिव ॥३३४॥

यत्र नानात्वेऽपि लिङ्गवचनयोः साधारणधर्मो नैकमात्रगामी भवति तत्र नायं दोषः[6] ॥

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥३३५॥

तथा—

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥३३६॥

---

१ After इति D adds अत्यधिकत्वस्य. २ C पातालम् for पाताल. ३ D शक्तितो for शशिनो. ४ After प्रतीतेः CD add यथा. ५ BC कतरो. ६ After दोषः CD add यथा.

तथा उपमायां कालपुरुषविध्यादिभेदा अपि दोषाः, उद्देश्यप्रतीतेरस्खलितरूपतया विश्रान्तेरभावात् । यथा—

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥३३७॥

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ॥ तथा—

विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥३३८॥

अत्र लता विभ्राजते न तु विभ्राजसे इति पुरुषभेदः ॥ तथा—

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥३३९॥

इत्यादौ गङ्गा प्रवहति न तु प्रवहतु इत्यप्रवृत्तप्रवृत्तात्मनो विधेर्भेदः ॥ एवमुपमायामसादृश्यमसंभवश्च दोषः । स्फुटमुदाहरणद्वयम् ॥

उत्प्रेक्षायामपि संभावनं ध्रुवादय एव शब्दा वक्तुं प्रभवन्ति न तु यथाशब्दोऽपि । तत्र तदुपादानं दोषः, यथा—

उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥३४०॥

एवं साधारणविशेषणबलादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने दोषः । यथा—

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरया[3] दिवसश्रिया ॥३४१॥

अत्र तिग्मरुचेः ककुभां च यथा सदृश[4]विशेषणबलेन व्यक्तिविशेष[5]परिग्रहेण च नायकतया व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वं भवितुमर्हतीति किं दयितयेति स्वशब्दोपादानेन ॥

एवमप्रस्तुतप्रशंसायामुपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थनं[6] नेयम् । उदाहरणं तु स्वयं बोध्यम् । एवमन्यदप्यूह्यम् ॥ एतान्दोषानुक्तदोषेषु केचिदन्तर्भावयन्ति । अत्र नास्माकमरुचिलेश इत्युपरम्यते ॥

---

१ A gives only first पाद and adds इति रघुवंशे. २ A इत्यत्र प्रवृत्ता० for इत्यप्रवृत्ता०; B अप्रवृत्तप्रवर्तनात्मनो in marg. ३ C om. चिरया दि०. ४ D तादृश० for सदृश. ५ After विशेष० D adds ०परिग्रहणबलेन. ६ C कदर्थिनं for कदर्थनं.

❀ ❀ ❀

उदञ्चत्तर्कौघस्नपितमतिरेकान्तसुभगं
भविष्णोः श्रीविष्णोश्चरणमधुलुण्टाकमधुपः[१] ।
प्रबन्धं निर्बन्धादिममतितरां युक्तिलहरी-
परीरम्भारम्भं जडभरतनामा भणितवान् ॥१॥

प्रत्यक्षरप्रबल[२]कर्कशतर्कचर्चा-
रत्नच्छटाविविधविभ्रमगुम्फितश्रीः ।
कण्ठे[३] सतां लुठतु हार इवैष हारी
श्रीवत्सलाञ्छनकवेर्वचसां विलासः ॥२॥

येनामण्डि कणादगौतममतं सांख्यं च संक्षोभितं
मीमांसा चुलकीकृतैव सकलं पीतं च पातञ्जलम् ।
वेदान्तार्थ[४]विचारपारगमतेर्ब्रह्मैकलब्धस्थितेः
श्रीवत्सस्य कृतिः सुधापरिणतिस्तस्येयमुन्मीलति ॥३॥

इति श्री[५]वत्सलाञ्छनभट्टाचार्यकृतायां[६] काव्यपरीक्षायां
पञ्चम उल्लासः ।

---

१ B ०लण्ठाक० for ०लुण्टाक०. २ A ०प्रचल० for ०प्रबल०. ३ BC चित्ते सतां वसतु for कण्ठे सतां लठतु. ४ BC वेदान्तैकविचार० for वेदान्तार्थ०. ५ D om. श्रीवत्सलाञ्छनभट्टाचार्यकृतायां. ६ BC ०विरचितायां for ०कृतायां. B closes with नृसिंहार्पणमस्तु.

# प्रथमं परिशिष्टम् ।

## काव्यपरीक्षाकारिकाः ।

१

काव्यमास्वादजीवातुः पदसंदर्भ उच्यते ।
सालंकारगुणादोषौ शब्दार्थाविति केश्चन ॥१॥
स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
एषामर्थास्तथा वाच्यलक्ष्यव्यङ्ग्या इति त्रयः ॥२॥
शक्तिमत्त्वं वाचकत्वं शक्तिर्जातौ परं मता ।
ईश्वरेच्छाविशेषोऽथ पदार्थान्तरमेव सा ॥३॥
मुख्यार्थान्वयबाधे स्यादन्यार्थप्रतिपत्तिकृत् ।
लक्षणा शक्यसंबन्धो रूढितोऽथ प्रयोजनात् ॥४॥
यत्स्वार्थेन पराक्षेपः स्वार्थं हित्वान्यकल्पनम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ।
एते एवाजहत्स्वार्थजहत्स्वार्थे प्रकीर्तिते ॥५॥
सारोपान्या तु यत्रोक्तावनपह्नुतभेदकौ ।
स्यातां तुल्याधिकरणावारोप्यारोपगोचरौ ॥६॥
विषय्यन्तःकृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका ॥७॥
भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ, साञ्जनो व्यञ्जको मतः ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥८॥
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥९॥
शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तु शब्दस्य सहकारिता ॥१०॥

[ शब्दार्थनिर्णयो नाम प्रथम उल्लासः ]

२

वाच्यातिशयिनि व्यङ्ग्ये चमत्कारविधानतः ।
उत्तमं तद् बुधैः काव्यं ध्वनिरित्यभिधीयते ॥११॥
अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।
शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥१२॥
अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥१३॥
विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।
कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥१४॥
रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥१५॥
कारणान्यथ कार्याणि सहचारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥१६॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥१७॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥१८॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥१९॥
निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।
तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ॥२०॥
स्थायी स्याद्विषयेष्वेव तत्त्वज्ञानाद्भवेद्यदि ।
इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥२१॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥२२॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥२३॥
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥२४॥

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥२५॥

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तः, तदाभासा अनौचित्यप्रवर्तिताः ॥२६॥

भावस्य शान्तिरुदयः संधिः शबलता तथा ।
रसादीनामनन्तत्वाद् भेद एको हि गण्यते ॥२७॥

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥२८॥

अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥२९॥

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ।
प्रौढोक्तिमात्रसिद्धो वा कवेस्तेनोम्भितस्य वा ॥३०॥

वस्तु वालंकृतिर्वेति चतुर्भेदो व्यनक्ति यत् ।
वस्त्वलंकारमथवा तेनासावष्टधा मतः ॥३१॥

शब्दार्थोभयभूरेको, भेदाश्चतुर्दशास्य तत् ।
वाक्ये द्व्युत्थः पदेऽप्यन्यः, वाक्ये पूर्वमुदाहृताः ॥३२॥
पदैकदेशरचनावर्णेष्वपि रसादयः ॥३३॥

एते प्रोक्ताः शुद्धभेदास्तेषां चान्योन्ययोजनम् ।
संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ॥३४॥

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥३५॥

शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥३६॥

[ काव्यभेदो नाम द्वितीय उल्लासः ]

३

येषां ज्ञानाच्चमत्कारो न सम्यगुपजायते ।
सालंकारगुणेऽप्यत्र ते दोषाः परिकीर्तिताः ॥३७॥
दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् ॥३८॥
संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥३९॥
अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥४०॥
प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥४१॥
अपदस्थपदसमासं विमतपरार्थं प्रसिद्धिपरिहीनम् ।
भग्नप्रक्रममभवन्मतयोगं वाक्यमेव यथा ॥४२॥
कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
संनिधानादिबोधार्थं, स्थितेष्वेतत्समर्थनम् ॥४३॥
ख्यातेऽर्थे निर्हेतोरदुष्टतानुकरणे तु सर्वेषाम् ।
वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥४४॥
व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥४५॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥४६॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥४७॥
न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।
संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥४८॥
आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥४९॥
स्मर्यमाणो विरुद्धो यः साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥५०॥

[ दोषनिरूपणो नाम तृतीय उल्लासः ]

४

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥५१॥
उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥५२॥
माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ॥५३॥
आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ॥५४॥
दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु ॥५५॥
शुष्केन्धनादिवत्स्वच्छजलवत्सहसैव यत्।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ॥५६॥
गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥५७॥
मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गौ रणौ लघू।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥५८॥
योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥५९॥
श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत्।
साधारणः समग्राणां स प्रसादो गुणः स्मृतः ॥६०॥
वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित्।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥६१॥

[ गुणनिर्णयो नाम चतुर्थ उल्लासः ]

५

यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥६२॥
वर्णसाम्यमनुप्रासः छेकवृत्तिगतो द्विधा।
सोऽनेकस्य सकृत्पूर्व एकस्याप्यसकृत्परः ॥६३॥

शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ।
पदानां स, पदस्यापि, वृत्तावन्यत्र तत्र वा ।
नाम्नः स वृत्त्यवृत्त्योश्च तदेवं पञ्चधा मतः ॥६४॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।
यमकं, पादतद्भागवृत्ति तद्यात्यनेकताम् ॥६५॥
वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।
श्लिष्यन्ति शब्दाः श्लेषोऽसा[वक्षरादिभिरष्टधा] ॥६६॥
तच्चित्रं यत्र वर्णानां पद्माद्याकृतिहेतुता ॥६७॥
पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥६८॥

१ साधर्म्यमु**पमा** भेदे पूर्णा लुप्ता च, साग्रिमा ।
श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥६९॥
उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।

२, ३ **अनन्वयः**, विपर्यास **उपमेयोपमा** तयोः ॥७०॥

४ संभावनमथो**त्प्रेक्षा** प्रकृतस्य समेन यत् ।

५ **ससंदेह**स्तु भेदोक्तौ तदनुक्तौ च संशयः ॥७१॥

६ तद्**रूपक**मभेदोऽयमुपमानोपमेययोः ।
उपमैव तिरोभूतभेदा रूपकमिष्यते ॥७२॥
नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥७३॥

७ प्रकृतं यन्निषिध्यान्यत्साध्यते सा **त्वपह्नुतिः** ।
द्योतयित्वा कमप्यर्थं गोपनीयं कथंचन ।
यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ॥७४॥

८ **श्लेषः** स वाक्य एकस्मिन्यत्रानेकार्थता भवेत् ॥७५॥

९, १० परोक्तिर्भेदकैः श्लिष्टैः **समासोक्तिः**, **निदर्शना** ।
अभवद्वस्तुसंबन्ध उपमापरिकल्पकः ।
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव हि सापरा ॥७६॥

११ **अप्रस्तुतप्रशंसा** या सा सैव प्रस्तुताश्रया ॥७७॥
निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य तदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥७८॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।
१२, १३ विज्ञेया**तिशयोक्तिः** सा, **प्रतिवस्तूपमा** तु सा ।
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥७९॥
१४ **दृष्टान्तः** पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥८०॥
सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
१५ सैव क्रियासु बह्वीषु कारकस्येति **दीपकम्** ।
मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ॥८१॥
१६ नियतानां सकृद्धर्मः सा पुनस्**तुल्ययोगिता** ।
१७ उपमानाद्यदन्यस्य **व्यतिरेकः** स एव सः ॥८२॥
निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
१८ वक्ष्यमाणोक्तविषयः स **आक्षेपो** द्विधा मतः ॥८३॥
१९ क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्**विभावना** ।
२० **विशेषोक्ति**रखण्डेषु कारणेषु फलावचः ॥८४॥
२१ **यथासंख्यं** क्रमेणैवं क्रमिकाणां समन्वयः ॥८५॥
सामान्यं वा विशेषो वा यदन्येन समर्थ्यते ।
२२ ज्ञेयः सो**ऽर्थान्तरन्यासः** साधर्म्येणेतरेण वा ॥८६॥
२३ **विरोधः** सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।
२४ **स्वभावोक्ति**स्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥८७॥
२५ **व्याजस्तुति**र्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।
२६ सा **सहोक्तिः** सहार्थस्य बलादेकं द्विवाचकम् ॥८८॥
२७ **विनोक्तिः** सा विनान्येन यत्रान्यः सन्न नेतरः ।
२८ **परिवृत्ति**र्विनिमयो योऽर्थानां स्यात्समासमैः ॥८९॥
प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।
२९, ३० तद्**भाविकं**, **काव्यलिङ्गं** हेतोर्वाक्यपदार्थता ॥९०॥

३१ **पर्यायोक्तं** विना वाच्यवाचकत्वेन यद्वचः ।
३२ **उदात्तं** वस्तुनः संपद् महतां चोपलक्षणम् ॥९१॥
तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्परं भवेत् ।
३३ **समुच्चयो**ऽसौ स त्वन्यो युगपद्या गुणक्रियाः ॥९२॥
३४ एकं क्रमेणानेकस्मिन्**पर्यायो**ऽन्यस्ततोऽन्यथा ।
३५ **अनुमानं** तदुक्तं यत्साध्यसाधनयोर्वचः ॥९३॥
३६ विशेषणैर्यत्साकूतैरुक्तिः **परिकरस्तु** सः ।
३७ **व्याजोक्ति**श्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥९४॥
किंचित्पृष्टमपृष्टं च कथितं यत्प्रकल्प्यते ।
३८ तादृगन्यव्यपोहाय **परिसंख्या** तु सा स्मृता ॥९५॥
यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
३९ तदा **कारणमाला** स्यात्, अथ हेतोरभेदतः ।
४० उक्तिर्हेतुमता **हेतुः** प्राचीनैरनुमोदितः ॥९६॥
या वस्तुनो गुणैर्युक्तैर्मिथो भूषणभूष्यता ।
४१ **अन्योन्य**मिति तज्ज्ञेयम्, उत्तरश्रुतिमात्रतः ॥९७॥
प्रश्नस्योन्नयनं यत्र क्रियते तत्र चासति ।
४२ असकृद्यदसंभाव्यमुत्तरं स्यात्त**दुत्तरम्** ॥९८॥
कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
४३ कर्मणा केनचिद्यत्र **तत्सूक्ष्मं** परिचक्षते ॥९९॥
४४ उत्तरोत्तरमुत्कर्षो भवेत्**सारः** परावधिः ।
४५ **समाधिः** सुकरं नाम कारणान्तरयोगतः ॥१००॥
४६ **समं** समतया योगो यदि संभावितः क्वचित् ॥१०१॥
क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।
४७ कर्तुः क्रियाफलं नैवानर्थः स **विषमो** द्विधा ॥१०२॥
महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
४८ आश्रयाश्रयिणौ स्यातां तनू **अप्यधिकं** तु तत् ॥१०३॥

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
४९ या तदीयस्य तत्स्तुत्यै **प्रत्यनीकं** तदुच्यते ॥१०४॥
विधीयते यद्बलवत्सजातीयोपलम्भनैः ।
५० तिरस्करणमन्यस्य तन्**मीलित**मिति स्मृतम् ॥१०५॥
स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।
५१ विशेषणतया वस्तु यत्र **सैकावली** द्विधा ॥१०६॥
यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।
५२, ५३ **स्मरणं, भ्रान्तिमान**न्यसंवित्तत्तुल्यदर्शने ॥१०७॥
विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥१०८॥
अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
५४ तथैव करणं चेति **विशेष**स्त्रिविधः स्मृतः ॥१०९॥
समुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।
५५ वस्तु तद्गुणतामेति भण्यते स तु **तद्गुणः** ।
५६ तद्रूपाननुहारश्चेदस्य तत्स्यादत**द्गुणः** ॥११०॥
५७ सेष्टा **संसृष्टि**रेतेषां भेदेनैकत्र या स्थितिः ॥१११॥
५८ अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु **संकरः** ।
एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥११२॥
स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम् ।
व्यवस्थितं च तेनासौ त्रिविधः परिकीर्तितः ॥११३॥

[ शब्दार्थालंकारवर्णनं नाम पञ्चम उल्लासः ]



# द्वितीयं परिशिष्टम् ।

## उदाहृतश्लोकसूची ।

### अ


| | |
|---|---|
| अइपिहुलं जलकुम्भं ३ | काव्यप्रकाशोद्धरण ३. १३ |
| अकुण्ठोत्कण्ठया पूर्णं १०७; ३२५ | का. प्र. ७.२०७ |
| अचल एष विभाति निरन्तरं १६६ | |
| अजस्रमास्फालितवल्लकीगुण २२६ | शिशुपालवध १.६ |
| अतन्द्रचन्द्राभरणा ४६ | का प्र. ४. ७२ |
| अतिथिं नाम काकुत्स्थात् ३३७ | रघु १७; का. प्र. १०. ५६४ |
| अतिपेलवमतिपरिमितवर्णं १०२ | का. प्र. ७. २०२ |
| अतिविततगगनसरणि | १२६ का. प्र. ७. २५७ |
| अतिविततमोन्धकूपगर्भाद् २४३ | |
| अत्रिलोचनसंभूत ८८ | का. प्र. ७. १५८ |
| अथ लक्ष्मणानुगतकान्तवपुः २३० | शिशु० ६. ३१ |
| अदृष्टे दर्शनोत्कण्ठा ६६ | का. प्र. ५. १२८ |
| अद्यापि स्तनशैलदुर्गविषमे ११८ | पद्यवेणी ५; हनु २; का. प्र. ७. २३८ |
| अधिकरतलतल्पं कल्पित ११४ | का. प्र. ७. २२३ |
| अनङ्गमङ्गलगृहापाङ्ग ७३; ६४ | का. प्र. ७. १४१ |
| अनङ्गरङ्गप्रतिमं तदङ्गं १७६ | का. प्र. ७. २४७ |
| अनयेनेव राज्यश्रीः २२२ | का. प्र. १०. ४१० |
| अनिर्भिन्नगभीरत्वात् २७८ | उ. रा. च. ३. १ |
| अन्यत्र व्रजतीति का खलु कथा | १७. का. प्रदीपोद्धरण ४ |
| अन्यदेव हि लावण्यं २४६ ··· | सा. द. १०. १२८ |
| अपसारय घनसारं १७३ कुट्टिनीमतम्; का. प्र. ७. ३४१; ३५३; वाम. ४.१.१ | |
| अपि यः स्वयं विषादी ६२ | |

अबिन्दुसुन्दरी नित्यं २०४ — उद्भट का. प्र. ६
अभिनवनलिनीकिसलय २६७ — का. प्र. १०. ४८२
अमुं कनकवर्णाभं ५४ — मभा. १२; का. प्र. ४. ६६
अमृतममृतं कः संदेहो ११० — वामन ३. २; का. प्र. ७. २१५
अयमेकपदे तया वियोगः १०१ — विक्रमो ४. १०; का. प्र. १०. ५११
अयं पद्मासनासीनः ३२६ — स. कं. १; का. प्र. १०. ५८६
अयं स रसनोत्कर्षी ६३ — म. भा. स्त्रीपर्व; का. प्र. ७. ३३७
अरे रामाहस्ताभरण १४३ — विक्रमो ; का. प्र. ७. २८३
अर्चनेन तव दिव्यवर्चसा ३२३
अर्थित्वे प्रकटीकृतेऽपि न १३८ — महावीर २. ६; का. प्र. ७. २७७
अर्थमुपेतुं वाञ्छेति ३७
अलमतिचपलत्वात्स्वप्न ६८ — बिल्हण ; का. प्र. ७. १६७
अलससिरोमणि धुत्ताणमग्गिमो ४१ — का. प्र. ४. ५०
अलं स्थित्वा श्मशानेऽस्मिन् ५१ — म. भा. १२; का. प्र. ४. ६३
अवन्ध्यकोपस्य विहन्तुरापदां ८० — किरात १. ३३
अविदग्धवणिग्वीथी २४४
अविरलकमलविकासः २६३ — रुद्रट ; का. प्र. १०. ५२६
असकलनयनावलोकितेन १७८
अस्त्युत्तरस्यां दिशि देवतात्मा १७७ — कुमार १. १
अस्या मुखस्य लीलां २४०
अस्याः सर्गविधौ प्रजापति २२६ — विक्रमो १. १०; का. प्र. १०.४२०
अहो केनेदृशी बुद्धिः १६० — का. प्र. ६. ३५३
अहो विशालं भूपाल ३०४ — काव्या २. २१६; का. प्र. १०. ५४२


## आ


आगत्य संप्रति वियोगविसंष्ठुला ६७ — का. प्र. ५. १२५
आज्ञा शक्रशिखामणिप्रणयिनी १३६ — बा. रा. ; का. प्र. ७. २७८
आदावञ्जनपुञ्जलिप्तवपुषां १०० — का. प्र. ७. २००
आदित्योऽयं स्थितो मूढाः ५३ — मभा. १२; का. प्र. ४. ६५

आद्यन्तमध्यरहितं २१३

आलानं जयकरिणः २३४ (आलानं जयकुञ्जरस्य. का. प्र. १०.४२६)

आलिङ्गितस्तत्रभवान् ८४ का. प्र. ७. १५४

आसीदञ्जनमत्रेति २७७ का. प्र. १०. ५००

इ

इदमनुचितमक्रमश्च पुंसां ११३ का. प्र. ७. २२२

इयं सुनयना दासी २५५ उद्भट ; का. प्र. १०. ४६५

उ

उअ णिच्चलणिप्फन्दा ६ गाथासप्त. १. ४; का. प्र. २. ८

उत्कृत्योत्कृत्य कृत्तिं २८ मा. मा. ५. २६

उत्तानोच्छूनमण्डूक १५५ का. प्र. ७. ३०४

उत्थाय हृदि लीयन्ते २१०

उत्फुल्लकमलकेसर ८६ नागा १. १३; का. प्र. ७. १४७

उदयमयते दिङ्मालिन्यं २३७ का. प्र. १०. ४३३

उदेति सविता ताम्रः १२३ का. प्र. ७. २४४

उद्ययौ दीर्घिकागर्भात् ३४० का. प्र. १०. ५६६

उन्नतं पदमुपैति यो लघुः २४२ का. प्र. १०. ४३८

उपकृतं बहु तत्र किमुच्यते ८ का. प्र. ४. २४

उभौ यदि व्योम्नि पृथक्प्रवाहौ २४७ शिशु० ३. ८

उरगं तुरगं खरं नरं वा १२

उव्व्यसावत्र तर्वालो ३२४ का. प्र. ४. २१४

उवरि घरां घणपटलं ७

ए

ए एहि किं पि कीए वि २६० का. प्र. १०. ४७१

एकस्त्रिधा वससि २६४ का. प्र. १०. ४७७

एष एव विषमो नवमेघः १८३

## क


कण्ठकोणविनिविष्टमीश ते ३१ उत्पल ; का. प्र. ४. ४५
कण्ठस्य तस्याः स्तनबन्धुरस्य २६४ कु. सं. १. ४२
कमलेव मतिर्मतिरिव कमला २२५ का. प्र. १०. ४१५
करिहस्तेन संबाधे १५४ का. प्र. ४. ३०३
कलक्वणितगर्भेण १८२ काव्यादर्श २. १०
कल्लोलवेल्लितदृषत्परुषप्रहारैः १३७ भल्लटशतक ; का. प्र. ४. २७६
कस्मिन्कर्मणि सामर्थ्यं १०६ का. प्र. ४. २०५
कः कः कुत्र न घुर्घुरायित ११५ का. प्र. ७. २२४
कामं कंदर्पचाण्डालो १८६ अ काव्यादर्श १. ६४
का विसमा देव्वगई २६६ का. प्र. १०. ५२६
काले पयोधराणां १६२ ( काले वारिधराणां...सा. द. १० १.३३)
किमुच्यतेऽस्य भूपाल १०६ का. प्र. ४. २०६
किविणाण धणं २६२ का. प्र. ४५७
किं ध्येयं विष्णुपदं २६०
कुसुमितलताभिरहतापि २६२ का. प्र. १०. ४७३
कुभोजनं महाराज १५७
कृतमनुमतं दृष्टं वा यैरिदं २२ वेणी. ३. २१; का. प्र. ४. ३६
कृपाणोदग्रदोर्दण्डः २२१
केसेसु बलामोडिअ ४६ का. प्र. ४. ६५
कैलासस्य प्रथमशिखरे ४५ का. प्र. ४. ६४
कौटिल्यं कचनिचये २६१ रुद्रट ; का. प्र. १०. ५२३
क्रेङ्कारः स्मरकार्मुकस्य ११६ का. प्र. ७. २२५
क्व सूर्यप्रभवो वंशः २३६ रघु. १. २; का. प्र. १०. ४३५
क्वाकार्यं शशलक्ष्मणः कुल ३६ विक्रमो ; का. प्र. ४. ५३; ७. ३३१
क्षिप्तो हस्तावलग्नः प्रसभ १७२ अमरु. २; का. प्र. ७. ३४०
क्षुद्राः संत्रासमेते २६ हनूमन्नाटक ११. २; का. प्र. ४. ४०

## ख


खणपाहुणिआ देअर ६० ध्वन्या ३; का. प्र. ४. १११


## ग


गगनं गगनाकारं २२४ वामनालं. ४. ३. १४
गङ्गेव प्रवहतु ते सदैव कीर्तिः ३३९ का. प्र. १०. ५६६
गम्यतामन्यतः पान्थ २६५
गर्जद्घनघटाटोपे १५०
गाङ्गमम्बु सितमम्बु यामुनं ३१७ का. प्र. १०. ५६५
गाढकान्तदशनक्षतव्यथा ४४ का. प्र. ४.६३
गाढालिङ्गणरहसुज्जअम्मि ४७ का. प्र. ४. ६६
गाढालिङ्गनवामनीकृत १५८ अमरु. ४०; का. प्र. १०. ३९६
गुणानामेव दौरात्म्यात् २६६ का. प्र. १०. ४८०
गुणैरनर्घ्यैः प्रथितो ३३५ का. प्र. १०. ५६२
गुरुजनपरतन्त्रतया १९१ का. प्र. ९. ३५४
गृहिणी सचिवः सखी मिथः २१ रघु. ८. ६७; का. प्र. १०. ५६२
गृहीतं येनासीः परिभवभया १३१ वेणी. ३. १९; का. प्र. ७. २६३
ग्रामतरुणं तरुण्या ११ रुद्रट ; का. प्र. १. ३
ग्रीवाभङ्गाभिरामं मुहु २७ शाकुन्तल. १. ७; का. प्र. ४. ४१


## च


चकासत्यङ्गनारामाः २०७ का. प्र. ९. ३९०
चकितहरिणलोललोचनायाः २११ का. प्र. १०. ३९३
चञ्चद्भुजभ्रमितचण्डगदाभि १८३ वेणी. १. २१
चण्डालैरिव युष्माभिः ३२७ वामन ; का. प्र. १०. ५८४
चन्द्रं गता पद्मगुणान्न भुङ्क्ते १४६ कुमार १. ४३; का. प्र. ७. २९४
चित्ते चिहुट्टदि ण खुट्टदि सा १७५ कर्पूर २. ४; का. प्र. ७. ३४३
चित्रं महानेष नवावतारः २९ का. प्र. ४. ४३

चिन्तारत्नमिव च्युतोऽसि ३३३ का. प्र. १०. ५६०
चिरकालपरिप्राप्त ६१ का. प्र. ७. १६६

## ज

जगति जयिनस्ते ते भावाः १२८ मा. मा, ; का. प्र. ७. २५७
जंघाकाण्डोरुनालो नख १२५ का. प्र. ७. १५०
जनस्थाने भ्रान्तं कनक ६६ भट्टवाचस्पति ; का. प्र. ५. १२४
जस्सेव वणो तस्सेव वेअणा २६८ का. प्र. १०. ५३३
जा ठेरं व हसन्ती ४८ का. प्र. ४. ६७
जाने कोपपराङ्मुखी प्रियतमा ३३ सुभा. शार्ङ्ग. का. प्र. ४. ४७
जितेन्द्रियत्वं विनयस्य कारणं १६२ का. प्र. ७. ३१६; १०. ५३५
ज्योत्स्ना चन्दनमाला २६१

## ढ

ढुंढुल्लन्तो मरीहिसि २२० का. प्र. १०. ४०७

## त

ततः कुमुदनाथेन २१६ मभा. ७ ; का. प्र. १०. ४०१
ततोऽरुणपरिष्यन्द १६३ का. प्र. ६. ३५५
तथाभूतां दृष्ट्वा नृप ५ वेणी. १. ११; का. प्र. ३. १५
तदिदमरण्यं यस्मिन् २८२ रुद्रट ; का. प्र. १०. ५०६
तदोजसस्तद्यशसः स्थिताविमौ २३६ नै. १. १४
तद्गच्छ सिद्ध्यै कुरु देवकार्यं १५२ कुमार. ३. १८; का. प्र. ७. १६८
तद्वेषोऽसदृशोऽन्याभिः ३३६ का. प्र. १०. ५६३
तपस्विभिर्या सुचिरेण लभ्यते ७८ का. प्र. ७. १४६
तनुवपुरजघन्योऽसौ २०८ का. प्र. ६. ३६१
तरुणिमनि कलयति कलां ५६ का. प्र. ४. ११०
तस्याः कर्णावतंसेन १४५
तस्यां रघोः सूनुरुपस्थितायां ३५ रघुवंश ६. ६८

तं वीक्ष्य वेपथुमती ३८ कुमार ५. ८५
तं सन्तः श्रोतुमर्हन्ति २७६ रघुवंश १. १०
तामनङ्गजयमङ्गलश्रियं १६६ का. प्र. ७. ३२२
तारतारतरैरेतैः १६६
तिष्ठेत्कोपवशात्प्रभावपिहिता १५६ विक्रमो ४. ६ का. प्र. ७. ३११
तीर्थान्तरेषु स्नानेन ७६ का. प्र. ७. २४५
त्यजत मानमलं बत विग्रहैः २६८ रघुवंश ६. ४७
त्वयि दृष्ट एव तस्या २५१ का.प्र. १०. ४५५
त्वयि निबद्धरतेः प्रियवादिनः ११२ विक्रमो ४. ५५; का. प्र. ७. २३५
त्वं विनिर्जितमनोभवरूपः ३०६ का. प्र. १०. ५४४
त्वामस्मि वच्मि विदुषां १४ का. प्र. ४. २३
त्वामालिङ्ग्य प्रणयकुपितां १६ मेघ ; का. प्र. ४. ३६

## द

दण्डकमण्डलुमण्डितहस्तः २०
दर्पान्धगन्धगजकुम्भकपाटकूट ४३ का. प्र. ४. ६२
दातारं कृपणं मन्ये २७२
दिवमप्युपयातानां ३१३ रुद्रट ; का. प्र. १०. ५५६
दीर्घीङ्वेवीङ्समः कश्चिद् १४७ का. प्र. ७. २६६
दृशा दग्धं मनसिजं २७१ विद्धशाल १. २; का. प्र. १०. ५६६
दृष्ट्वैकासनसंस्थिते प्रियतमे १८४ अमरु १६
देवीभावं गमिता २५० रत्ना ; का. प्र. १०. ४५३
दोर्भ्यां तितीर्षति तरङ्गवतीभुजंगं २४१ का. प्र. १०. ४३७
द्वयं गतं संप्रति शोचनीयतां ११७ कुमार ५. ६१; का. प्र. ४.१८६; २५२
द्विधाकृतात्मा किमयं दिवाकरो २२७

## ध

धन्यानां गिरिकन्दरोदरभुवि ३० भर्तृ. वैराग्य. १०५
धन्यासि या कथयसि ४२ शार्ङ्ग ; का. प्र. ४. ६१

धम्मिल्लस्य न कस्य ६५ — वामन; का. प्र. ७.१८२
धामधपितनवैन्द्वं महः ३१२
धीरो विनीतो निपुणो १०८ — का. प्र. ७. २१०

## न

न काव्यसदृशं किंचित् २१५
न चेह जीवितः कश्चित् ५२ — म. भा. १२; का. प्र. ४. ६४
न तज्जलं यन्न सुचारुपङ्कजं ३०६ — भट्टि २. १६; का. प्र. १०. ५४६
नन्वाश्रयस्थितिरियं तव २८५ — भल्लट; का. प्र. १०. ५१३
नयथं तव रक्तं च २८८
नयनानन्ददायीन्दोः ३२० — का. प्र. १०. ५७४
नाथे निशाया नियतेर्नियोगाद् १२२ — का. प्र. ७. २४३
निजदोषावृतमनसां २६५ — का. प्र. १०. ४७८
निजनयनप्रतिबिम्बैः १८६ — सा. द. ८. ६६
निम्ननाभिकुहरेषु यदम्भः ३१० — का. प्र. १०. ५५०
निर्वाणवैरदहनाः प्रशमादरीणां १५६ — वेणी १. ७; का. प्र. ७. ३०५
निशात्ययव्यञ्जिनि पङ्कजानां २६३
निशा शशाङ्कं शिवया गिरीशं ३०० — नै. ३. ४८
निःशेषच्युतचन्दनं स्तन १० — अमरु १०५; का. प्र. १. २
न्यक्कारो ह्ययमेव मे ६६ — हनू १४. ७; का. प्र. ७. १८३
न्यञ्चद्भ्रूभङ्गि तस्याः किं १६

## प

पतत्यधो धाम विसारि २२८ — माघ २. २
पतिश्वशुरता ज्येष्ठे १८७ — म. भा. ?
पाण्डु क्षामं वदनं २५४ — का. प्र. ७. ३३२; १०. ४६०
पाताल इव नाभिस्ते ३३० — वामन ४. २; का. प्र. १०. ५८७
पितृवसतिमहं व्रजामि तां ८३ — का. प्र. ७. १७७
पुराणि यस्यां सवराङ्गनानि ३०८ — नवसाहसाङ्क १; का. प्र. १०. ५४८

पौरं सुतीयति जनं २१७ — का. प्र. १०. ४०३
प्रजा इवाङ्गादरविन्दनाभेः ७४
प्रागप्राप्तनिशुम्भशांभवधनुः १६३ महावीर २.३३; का.प्र. ७.२०६;३१७;३१८
प्रातः पुनः स्यादुदियाच्च भानुः १६६
प्राप्ताः श्रियः सकलकामदुघाः १३३ — भर्तृ. वै. ७१; का. प्र. ७.२७१
प्रेयान्सोऽयमपाकृतः ५६ — वामन ३; का. प्र. ४. ६८

बहवस्ते गुणा राजन् ५०
ब्राह्मणातिक्रमत्यागो ७१ — महावीर २. १०; का. प्र. ७. १३०

## भ

भद्रात्मनो दुरधिरोहतनो १ — का. प्र. २. १२
भम धम्मिअ वीसद्धो २ — गाथासप्त; का. प्र. ५. १३८
भासते प्रतिभासार २०५ — का. प्र. ६. ३८७
भूपालरत्ननिर्दैन्य १२६ — का. प्र. ७. २६०
भोजनभूषणमबला २६८
भ्रमिमरतिमलसहृदयतां ६८ — ध्वन्या २.३; का. प्र. ५. १२६

## म

मञ्जुमन्थरगतिः पयोमुचां ८२
मतिरिव मूर्तिर्मधुरा २२३ — का. प्र. १०. ४१३
मथ्नामि कौरवशतं समरे ७२ — वेणी १. १५; का. प्र. ५. १३१
मधुरिमरुचिरं वचं खलानां २८६ — का. प्र. १०. ५१६
मनोरागस्तीव्रं विषमिव १७४ — मा. मा. २. १; का. प्र. ८. ३४२
मल्लिकामालभारिण्यः ३०७ — काव्यादर्श २. २१५
महत्यागदयायुक्तं २००
महाप्रलयमारुतक्षुभित १२० — वेणी; का. प्र. ७. २४२
महौजसो मानधना धनार्चिता २८८ — किरात १. १६; का. प्र. १०.५१६

मानमस्या निराकर्तुं २६६ काव्यादर्श २. २६६ का. प्र. १०. ५३४
मित्रे क्वापि गते सरोरुहवने १७६ का. प्र. ८. ३४४
मुक्ताः केलिविसूत्रहारगलिताः २८१ का. प्र. १०. ५०५
मूर्ध्नामुद्वृत्तकृत्ता ८६ हनू ८. (१)(४८); का. प्र. ७. १५६; ८. ३४८
मृगचक्षुषमद्राक्ष १४७ का. प्र. ७. २६५
मृधे निदाघघर्मांशु २१८ का. प्र. १०. ४०४

य

यत्रानुल्लिखिताख्यमेव १३४ का. प्र. ७. २७३
यत्रैता लहरीचलाचलदृशो २८७ का. प्र. १०. ५१८
यथायं दारुणाचारः ७५ का. प्र. ७. १४३
यदा त्वामहमद्राक्षं १४६ का. प्र. ७. २६७
यदानतोऽयदानतो १६७ आनन्द. देवीशतक; का. प्र. ६. ३६५
यदि दहत्यनलोऽत्र किमद्भुतं १८५ आनन्द देवीशतक; का. प्र. ७. २७२
यश्चाप्सरोविभ्रममण्डनानां ६६ कुमार १. ४; का. प्र. ७. १६६
यस्य ज्ञानदयासिन्धोः ६५ अमरकोष १. १
यस्य न सविधे दयिता १६१ का. प्र. ६. ३५७
यं प्रेक्ष्य चिररूढापि २८० मेण्ठ–हयग्रीववध; का. प्र. १०. ५०४
यं पूयते सदा स्नात्वा १०२
यामीति प्रियपृष्टायाः १८
यावकरसार्द्रपादप्रहार ७७ का. प्र. ७. १४५
युगान्तकालप्रतिसंहृतात्मनो ३०५ शिशु १.२३; का. प्र. १०. ५४३
येन ध्वस्तमनोभवेन १५३ सुभा॰ चन्द्रक; का. प्र. ७. ३०२. ध्व. २
येषां तास्त्रिदशेभदानसरितः १२४ का. प्र. ७. २२७
योऽसकृत्परगोत्राणां २०१ का. प्र. ६. ३७६

र

रइकेलिहिअणिअंसण ५५ गाथा. ५. ५५; का. प्र. ४. ६७
रक्ताशोक कृशोदरी क नु गता १५१ विक्रमो; का. प्र. ७. ३००

रसासार रसासार २०६ रुद्रट; का. प्र. ६. ३८८
राकाविभावरीकान्त ८६ का. प्र. ७. १५६
राकासुधाकरमुखी तरला ३४ का. प्र. ४. ४६
राजन्विभान्ति भवतश्चरितानि १०६ का. प्र. ७. २११
राजर्षिसूनोरपि मे ६२
राज्यं वसु च देहश्च ८४ सा. द. ३. १४६
राममन्मथशरेण ताडिता ११६ रघु. ११. २०; का. प्र. ७. २५४
रामोऽसौ भुवनेषु विक्रमगुणैः ५८ राघवा.; का. प्र. ४. १०६
रामोऽहं जनयत्येव १६८
रूपामृतस्य वापी २३२

ल

लग्नं रागावृताङ्ग्या सुदृढ १४१ वेणीदत्त, पद्यवेणी २; का. प्र. ७. २४१
लतामूले लीनो हरिणपरिहीनो २४५
लहिऊण तुज्झ बाहुप्फंसं २३८ का. प्र. १०. ४३४
लावण्यं तदसौ कान्तिः ५ का. प्र. ४. ७५
लावण्यौकसि राजनि २५७
लास्यं कमलवनानां २७६
लिखन्नास्ते भूमिं बहिरवनतः ५७ अमरु ७; का. प्र. ४. १००
लिम्पतीव तमोऽङ्गानि ३१८ मृच्छ १. ३४;
का. प्र. १०. ४१७; ५६८

व

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैः २६७ का. प्र. १०. ५३०
वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि ६४
वक्त्राम्भोजं सरस्वत्यधिवसति १३५ भोजप्रबन्ध; का. प्र. ७. २७४
वदनं वरवर्णिन्याः १६४ का. प्र. ६. ३५८
वद वद जितः स शत्रुः १६० रुद्रट; का. प्र. ७. ३१३
वज्रवैडूर्यचरणैः ८७ का. प्र. ७. १८१

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ३२८ वामन; का. प्र. १०. ५८५
वागर्थाविव संपृक्तौ २१२ रघुवंश १. १
वाताहारतया जगद्विषधरैः १४२ भल्लट; का. प्र. ७. २८२
विद्वन्मानसहंस वैरिकमला २३३ का. प्र. १०. ४२५
विनयप्रणयैककेतनं १०४ का. प्र. ७. २०४
विनानयेन राज्यश्रीः २७५
विना रजन्या कश्चन्द्रो २७४
विभज्य मेरुर्न यदर्थिसात्कृतो २३ नै. १. १६
विभिन्नवर्णा गरुडाग्रजेन ३१६ शिशु ४. १४; का. प्र. १०. ५६३
विभ्राजसे मकरकेतनमर्चयन्ती ३३८ रत्नावली
विलोचनं दक्षिणमञ्जनेन ३६ रघुवंश ७. ८
वेत्रत्वचा तुल्यरुचां वधूनां ३११ का. प्र. १०. ५५८
वैखानसैः परिवृतेषु वनेषु १८१
वैवस्वतो मनुर्नाम १३; १८० रघु. १. ११
व्यानम्रा दयितानने १६५ का. प्र. ७

## श

शनिरशनिश्च तमुच्चैः ४० का. प्र. ४. ५६
शिरामुखैः स्यन्दत एव रक्तं २५ नागा ५. १५
शिरीषादपि मृद्वङ्गी ३०२ नवसाहसाङ्क ; का. प्र. १०. ५३७
शृणु सखि वत वचनीयं २५८
शून्यं वासगृहं विलोक्य १५ अमरु ८२; का. प्र. ४. ३०
शैलेन्द्रप्रतिपाद्यमानगिरिजा २८६ का. प्र. १०. ५२०
शोणं बिम्बोष्ठकान्त्या ३१६
श्यामां श्यामलिमानमानयत भोः १३६ विद्ध; का. प्र. ७. २७५
श्रितक्षमा रक्तभुवः ६७ का. प्र. ७. १६६
श्रुतेन बुद्धिर्व्यसनेन मूर्खता १४० का प्र. ७. २७६

## स


| | |
|---|---|
| सकलकलं पुरमेतत् २०३ | का. प्र. ६ |
| सक्तवो भक्षिता राजन् ३३४ | का. प्र. १०. ५६१ |
| सत्यं मनोरमा रामाः १७० | का. प्र. ७. ३३३ |
| सदानवरिपुं शंभुं ३२६ | |
| सदा मध्ये यासामियममृत १२७ | का. प्र. ७. २५६ |
| सदा स्नात्वा निशीथिन्यां १३२ | का. प्र. ७. २६७ |
| सद्यः करस्पर्शमवाप्य चित्रं २६६ | नवसाह ; का. प्र. १०. ५३६ |
| सद्योमुण्डितमत्तहूणचिबुक १८८ | वाम. ४. २. २. सा. द. ८ |
| स पीतवासाः प्रगृहीतशार्ङ्गो ३३२ | का. प्र. १०. ५८६ |
| सममेव समाक्रान्तं २४६ | रघु ४.४ |
| स मुनिर्लाञ्छितो मौञ्ज्या ३३१ | वामन ४. २; का. प्र. १०. ५८८ |
| सम्यग्ज्ञानमहाज्योतिः ८५ | का. प्र. ७. १५५ |
| सरसिजमिदमाननं च २०६ | |
| सरागया स्रुतघनघर्मतोयया १७१ | शिशु. १७. २ |
| सविता विधवति २१६ | का. प्र. १०. ४०५ |
| सव्रीडा दयितानने १६४ | का. प्र. ७. ३२१ |
| संकेतकालमनसं विटं ६ | ध्वन्या २; का. प्र. १०. ५३१ |
| संग्रामाङ्गणमागतेन भवता २५३ | सदुक्ति ; का. प्र. ७. २२६ |
| संप्रहारे प्रहरणैः १६७ | का. प्र. ७. ३१६ |
| साकं दिवसनिशाभिः २७३ | |
| सा च दूरे सुधासान्द्र ६३ | का. प्र. ७. १६६ |
| साधनं सुमहद्यस्य ८१ | का. प्र. ७. १५१ |
| सा रसवत्ता विहता १८६ | वासवदत्ता |
| सा वसइ तुज्झ हिअए ३१४ | गाथा ; का. प्र. १०. ५६० |
| सितकरकररुचिरविभा १६५ | का. प्र. ७. ३१४; ६. ३५६ |
| सिंहिकासुतसंत्रस्तः ३०३ | का. प्र. १०. ५३८ |
| सुचरणविनिविष्टैः १८१ अ | सा. द. ८ |

| | |
|---|---|
| सुधाकरकराकार ६० | का. प्र. ७. १६५ |
| सुमहद्विचित्रमेतत् ३०१ | |
| सुसितवसनालंकारायां १२१ | का. प्र. ७. २७६; १०. ४७६ |
| सौभाग्यं वितनोति वक्त्रशशिनो ३२१ | का. प्र. १०. ५७५ |
| स्तुमः कं वामाक्षि क्षणमपि ३३ | का. प्र. ४. ४८ |
| स्तोकेनोन्नतिमायाति २०२ | का. प्र. ६. ३७८ |
| स्निग्धश्यामलकान्तिलिप्तवियतो ६१ | ध्वन्या २; का. प्र. ४. ११२ |
| स्पष्टोल्लसत्किरणकेसर ३२२ | हरिविजय १६; का. प्र. १०. ५७६ |
| स्पृशति तिग्मरुचौ ककुभः करैः ३५१ | हरिवि. ३; का. प्र. १०. ६०१ |
| स्फुटनीलोत्पलपटलं २३५ | |
| स्फुरदद्भुतरूपमुत्प्रताप ३१५ | का. प्र. १०. ५६१ |
| स्वपिति यावदयं निकटे जनः १३० | का. प्र. ७. २६१ |

ह

| | |
|---|---|
| हनूमदाद्यैर्यशसा मया पुनः २५६ | नैषध ६. १२३; सा. द. १० |
| हन्तुमेव प्रवृत्तस्य १४४ | का. प्र. ७. २८५ |
| हरवन्न विषमदृष्टिः २५६ | का. प्र. १०. ४६८ |
| हरस्तु किंचित्परिवृत्तधैर्यः ७० | कुमार ; का. प्र. ५. ११६ |
| हा नृप हा बुध हा कविबन्धो १११ | का. प्र. ७. २१६ |
| हिन्दोलिकेयमिन्दोः २३१ | |
| हृदयमधिष्ठितमादौ २४८ | कुट्टिनी ६६; का. प्र. १०. ४५२ |

—***—